॥ श्रीः ॥

श्रीमदाचार्यहेमचंद्रविरचितः

# अभिधानचिंतामणिः ।

## अकारादिवर्णानुक्रमसहितः ।

श्रीजिनदेवमुनीश्वरविरचितेन

## अभिधानचिंतामणिशिलोञ्छेन

तथा

अभिधानचिंतामणिशेषनाममालया च संवलितः ।

स च

भावनगरस्थश्रीजैनधर्मप्रसारकसभया

मुम्बय्याम्

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्राकाश्यं नीतः ।

१९५६ वत्सरे.

# भूमिका.

अयि सर्वत्र निरुपध्यसाधारणपरमवात्सल्यैकप्रसिद्धा विद्वांसः । इदं श्रीमद्भ्यो विदितं क्रियते । अस्याभिधानचिंतामणेः कर्त्तानवद्याविरलगद्यपद्यावलीविरचनचटुलचातुरीचंचुरीणप्रचुरतरबोधसौबुध्यधोरणीधुरीणांतःकरणः कुमुदकुंदसुंदरशरदिंदुहासकैलासकासकुसुमप्रकाशजित्वरजगदखंडमंडननिजयशोधवलिमसुधाधवलिताशेषभुवनमंडलः कृतातिशयपुण्यपरिलब्धमुनिधर्मविधीयमानतमःपुंजप्रकाशदेदीप्यमानानलदंदह्यमानपातकसमूहः श्वेतांबरजैनाचार्यश्रीहेमचंद्रसूरिः कदा कतमं भूमिमंडलं मंडयामासेति जिज्ञासायामनेकग्रंथपर्य्यालोचने प्रवृत्ते सत्येवं निर्णयः समजनि । गुर्जरदेशेषु कुमारपालराज्यसमय एवाचार्यहेमचंद्रसमयः । काव्यमालापुस्तकांतर्गतप्राचीनलेखमालानुसारेण तथार्हतगुरुपट्टक्रमबोधेन द्वादश्यां ख्रिस्तशतिकायां श्रीहेमचंद्रसूरिसत्ताधारभूतावगम्यते । अनेनाचार्यश्रीहेमचंद्रेणेयन्तो ग्रंथा निर्मिता इति निश्चितं नैव । परंत्वनेकलक्षात्मकग्रंथकर्त्ता श्रीहेमचंद्राचार्यो भारतवर्षे विख्यातयशाः समजनि ।

अस्याभिधानचिंतामणेः पुस्तकद्वयमस्माभिः प्राचीनग्रंथकोपात्समासादितम् । तत्रैकं तु प्रायः शुद्धं द्वितीयं किंचिदशुद्धं । एवं पुस्तकद्वयाधारेणैवास्मदीयशास्त्रिनर्मदाशंकरदामोदरशर्मणाकृतशोधनेऽप्यस्मिन् पुस्तके दृष्टिदोषादक्षरयोजकदोषाद्वा यत्र क्वचिदशुद्धिः स्थिता जाता वा तत्र सहृदयहृदयाः सौहार्दतः समाधास्यन्ति यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ १ ॥

इति विज्ञापयति.

जैनधर्मप्रसारकसभा,
भावनगर.

# अभिधानचिंतामणेः विषयानुक्रमः ।



स्तुमस्त्रिसंध्यं प्रभुहेमसूरेरनन्यतुल्यामुपदेशशक्तिम् ।
अतींद्रियज्ञानविवर्जितोऽपि यः क्षोणिभर्तुर्व्यधित प्रबोधम् ॥

" सोमप्रभाचार्यः "

श्रीसर्वज्ञाय नमः ।

# अभिधानचिन्तामणौ

## देवाधिदेवकाण्डः

### प्रथमः ।

प्रणिपत्यार्हतः सिद्धसाङ्गशब्दानुशासनः ।
रूढयौगिकमिश्राणां नाम्नां मालां तनोम्यहम् ॥ १ ॥
व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः ।
योगोऽन्वयः स तु गुणक्रियासम्बन्धसम्भवः ॥ २ ॥
गुणतो नीलकण्ठाद्याः क्रियातः स्रष्टृसन्निभाः ।
स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नाम तद्वताम् ॥ ३ ॥
स्वात् पाल-धन-भुग्-नेतृ-पति-मत्वर्थकादयः ।
भूपालो भूधनो भूभुग् भूनेता भूपतिस्तथा ॥ ४ ॥
भूमांश्चेति कविरूढ्या ज्ञेयोदाहरणावली ।

जन्यात्[१]कृत्-कर्त्तृ-सृट्-स्रष्टृ-विधातृ-कर-सू-समाः ॥ ५ ॥
जनकाद्[२] योनि-ज-रुह-जन्म-भू-सूत्यणादयः ।
धार्य्यात्[३] ध्वजा-ऽस्त्र-पाण्यऽङ्क-मौलि-भूषण-भृन्निभाः ॥ ६ ॥
शालि-शेखर-मन्वर्थ-मालि-भर्त्तृ-धरा अपि ।
भोज्याद्[४] भुग-ऽन्धो-व्रत-लिट्-पायि-पाऽशा-ऽशनाऽदयः॥७॥
पत्युः कान्ता-प्रियतम-वधू-प्रणयिनी-निभाः ।
कलत्रात् वर-रमण-प्रणयीश-प्रियादयः ॥ ८ ॥
सख्युः[५] सखिसमा वाह्याद्[६] गामि-याना-ऽसनादयः ।
ज्ञातेः[७] स्वसृ-दुहित्रा-ऽत्मजा-ऽग्रजा-ऽवरजाऽदयः ॥ ९ ॥
आश्रयात्[८]सद्मपर्य्याय-शय-वासि-सदाऽदयः ।
वध्याद्[९] भिद्-द्वेषि-जिद्-घाति-ध्रुगरि-ध्वंसि-शासनाः ॥१०॥

---

(१) जन्यात्कार्याद्यथा विश्वकृत् विश्वकर्ता विश्वसृट् विश्वस्रष्टा विश्वविधाता विश्वकरः विश्वसूः ब्रह्मा अत्र समशब्द आद्यर्थः तेन विश्वकारकः विश्वजनक इत्याद्यपि कविरूढ्यैव । (२) यथा आत्मयोनिः आत्मज इत्यादि । (३) यथा वृषध्वजः शूलास्त्र इत्यादि । (४) यथा मधुभुक् मध्वंध इत्यादि । (५) यथा नीलकण्ठसखः इत्यादि। (६) यथा वृषगामी वृषयानः इत्यादि । (७) यथा यमस्वसा इत्यादि । (८) यथा द्युसद्मा द्युशयः इत्यादि । (९) यथा पुरभिद् पुरद्वेषी इत्यादि ।

अप्य-ऽन्तकारि-दमन-दर्प्पच्छित्-मथना-ऽदयः ।
विवक्षितो हि सम्बन्ध एकतोऽपि पदात्ततः ॥ ११ ॥
प्राक्प्रदर्शितसबन्धिशब्दा योज्या यथोचितम् ।
दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहनः ॥ १२ ॥
स्वत्वे पुनर्वृषपतिर्धार्य्यत्वे वृषलांछनः ।
अंशोर्धार्य्यत्वेंऽशुमाली स्वत्वेंऽशुपतिरंशुमान् ॥
वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक् शिखी १३ सार्द्धश्लोकः
चिह्नैर्व्यक्तैर्भवेद्व्यक्तेर्ज्जातिशब्दोऽपि वाचकः ॥
तथा ह्यगस्तिपूता दिग् दक्षिणाशा निगद्यते ॥ १४ ॥
अयुग्-विषमशब्दौ त्रि-पञ्च-सप्तादिवाचकौ ।
त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् ॥ १५ ॥
गुणशब्दो विरोध्यर्थं नञादिरितरोत्तरः ।
अभिधत्ते यथा कृष्णः स्यादसितः सितेतरः ॥ १६ ॥
वाड्वाग्न्यादिषु पदे पूर्वे वडवाग्न्यादिपूत्तरे ।
दृष्टेऽपि भूभृदाद्येषु पर्य्यायपरिवर्तनम् ।
एवं परावृत्तिसहा योगात् स्युरिति यौगिकाः॥१७॥सार्द्धश्लो.
मिश्राः पुनः परावृत्त्यसहा गीर्वाणसन्निभाः ।

प्रवक्ष्यन्तेऽत्र लिङ्गं तु ज्ञेयं लिङ्गानुशासनात् ॥ १८ ॥
देवाधिदेवाः प्रथमे काण्डे देवा द्वितीयके ।
नरास्तृतीये तिर्यञ्चस्तुर्ये एकेन्द्रियादयः ॥ १९ ॥
एकेन्द्रियाः पृथिव्यम्बुतेजोवायुमहीरुहः ।
(1)कृमिपीलकलूताद्याः स्युर्द्वित्रिचतुरिन्द्रियाः ॥ २० ॥
पञ्चेन्द्रियाश्चेभकेकिमत्स्याद्याः (2)स्थलखाम्बुगाः ।
पञ्चेन्द्रिया एव देवा नरा नैरयिका अपि ॥ २१ ॥
नारकाः पञ्चमे साङ्गाः षष्ठे साधारणाः स्फुटम् ।
प्रस्तोष्यन्तेऽव्ययाश्चात्र (3)त्वन्ताथादी न पूर्वगौ ॥ २२ ॥

अर्हन्[1] जिनः[2] पारगतस्[3]त्रिकालवित्[4]
क्षीणाष्टकर्मा[5] परमेष्ठ्य[6]धीश्वरः[7] ।
शम्भुः[8] स्वयम्भू[9]र्भगवान्[10] जगत्प्रभु[11]-
स्तीर्थङ्कर[12]स्तीर्थकरो[13] जिनेश्वरः[14] ॥ २३ ॥

---

(१) कृमयो द्वीन्द्रियाः पीलकास्त्रीन्द्रियाः लूताश्चतुरिन्द्रियाः इति क्रमेण ज्ञातव्याः । (२) स्थलगाः इभादयः खगाः केक्यादयः अम्बुगाः मत्स्यादयः ।( ३ ) तुः अन्ते यस्य स त्वन्तः अथ आदौ यस्य सः अथादिः त्वन्तश्च अथादिश्च त्वन्ताथादी शब्दौ पूर्वगौ अन्वये न भवतः इत्यर्थः ।

स्याद्वाद्यभयदसार्वाः सर्वज्ञः सर्वदर्शिकेवलिनौ ।
देवाधिदेवबोधिदपुरुषोत्तमवीतरागाप्ताः ॥ २४ ॥
एतस्यामवसर्पिण्यामृषभोऽजितसम्भवौ ।
अभिनन्दनः सुमतिस्ततः पद्मप्रभाभिधः ॥ २५ ॥
सुपार्श्वश्चन्द्रप्रभश्च सुविधिश्चाथ शीतलः ।
श्रेयांसो वासुपूज्यश्च विमलोऽनन्ततीर्थकृत् ॥ २६ ॥
धर्मः शान्तिः कुन्थुररो मल्लिश्च मुनिसुव्रतः ।
नमिर्नेमिः पार्श्वो वीरश्चतुर्विंशतिरर्हताम् ॥ २७ ॥
ऋषभो वृषभः श्रेयान् श्रेयांसः स्यादनन्तजिदनन्तः ।
सुविधिस्तु पुष्पदन्तो मुनिसुव्रतसुव्रतौ तुल्यौ ॥ २८ ॥
अरिष्टनेमिस्तु नेमिर्वीरश्चरमतीर्थकृत् ।
महावीरो वर्द्धमानो देवार्य्यो ज्ञातनन्दनः ॥ २९ ॥
गणा नवाऽस्यर्षिसङ्घा एकादश गणाधिपाः ।
इन्द्रभूतिरग्निभूतिर्वायुभूतिश्च गौतमाः ॥ ३० ॥
व्यक्तः सुधर्मा मण्डितमौर्यपुत्रावकम्पितः ।

---

( १ ) यद्यपि वीरस्य एकादश गणधरा आसन् तथापि नवानामेव विभिन्नवाचनाभूदिति ते नवैवापि भवन्ति । ( २ ) गौतमाः गोतमवंशजाः ।

अचलभ्राता मेतार्यः प्रभासश्च पृथक्कुलाः (१) ॥ ३१ ॥
केवली चरमो जम्बूस्वाम्यऽथ प्रभवः प्रभुः ।
शय्यम्भवो यशोभद्रः सम्भूतविजयस्ततः ॥ ३२ ॥
भद्रबाहुः स्थूलभद्रः श्रुतकेवलिनो हि षट् ।
महागिरिसुहस्त्याद्या वज्रान्ता दशपूर्विणः ॥ ३३ ॥
इक्ष्वाकुकुलसम्भूता स्याद् द्वाविंशतिरर्हताम् ।
मुनिसुव्रतनेमी तु हरिवंशसमुद्भवौ ॥ ३४ ॥
नाभिश्च जितशत्रुश्च जितारिरथ सम्बरः ।
मेघो धरः प्रतिष्ठश्च महसेननरेश्वरः ॥ ३५ ॥
सुग्रीवश्च दृढरथो विष्णुश्च वसुपूज्यराट् ।
कृतवर्म्मा सिंहसेनो भानुश्च विश्वसेनराट् ॥ ३६ ॥
सूरः सुदर्शनः कुम्भः सुमित्रो विजयस्तथा ।
समुद्रविजयश्चाश्वसेनः सिद्धार्थ एव च ॥ ३७ ॥
मरुदेवा विजया सेना सिद्धार्था च मङ्गला ।

---

(१) व्यक्तो भरद्वाजगोत्रजः सुधर्मा अग्निवैश्यगोत्रजः मण्डितपुत्र-मौर्यपुत्रौ वशिष्ठकश्यपगोत्रौ अकंपितो गोतमगोत्रः अचलभ्राता हारितगोत्रः मेतार्य्यप्रभासौ कौण्डिन्यगोत्रौ ।

ततः सुसीमा[६] पृथ्वी[७] लक्ष्मणा[८] रामा[९] ततः परम् ॥ ३८ ॥

नन्दा[१०] विष्णु[११]र्जया[१२] श्यामा[१३] सुयशाः[१४] सुव्रता[१५] चिरा[१६] ।

[१७]श्री[१८]देवी प्रभावती[१९] च पद्मा[२०] वप्रा[२१] शिवा[२२] तथा ॥ ३९ ॥

वामा[२३] त्रिशला[२४] क्रमतः पितरो मातरोऽर्हताम् ।

स्याद्गोमुखो[१] महायक्ष[२]स्त्रिमुखो[३] यक्षनायकः[४] ॥ ४० ॥

तुम्बुरुः[५] सुमुख[६]श्चापि मातङ्गो[७] विजयो[८]ऽजितः[९] ।

ब्रह्मा[१०] यक्षेट्[११] कुमारः[१२] षण्मुख[१३]पाताल[१४]किन्नराः[१५] ॥ ४१ ॥

गरुडो[१६] गन्धर्वो[१७] यक्षेट्[१८] कुबेरो[१९] वरुणो[२०]ऽपि च ।

भृकुटि[२१]र्गोमेधः[२२] पार्श्वो[२३] मातङ्गो[२४]ऽर्हदुपासकाः ॥ ४२ ॥

चक्रेश्वर्य[१]जितबला[२] दुरितारि[३]श्च कालिका[४] ।

महाकाली[५] श्यामा[६] शान्ता[७] भृकुटि[८]श्च सुतारका[९] ॥ ४३ ॥

अशोका[१०] मानवी[११] चण्डा[१२] विदिता[१३] चाङ्कुशा[१४] तथा ।

कन्दर्पा[१५] निर्वाणी[१६] बला[१७] धारिणी[१८] धरणप्रिया[१९] ॥ ४४ ॥

नरदत्ता[२०]थ गान्धार्य[२१]म्बिका[२२] पद्मावती[२३] तथा ।

सिद्धायिका[२४] चेति जैन्यः क्रमाच्छासनदेवताः ॥ ४५ ॥

वृषो[१] गजो[२]ऽश्वः[३] प्लवगः[४] क्रौञ्चो[५]ऽब्जं[६] स्वस्तिकः[७] शशी[८] ।

मकरः[९] श्रीवत्सः[१०] खड्गी[११] महिषः[१२] शूकर[१३]स्तथा ॥ ४६ ॥

श्येनो[१४] वज्रं[१५] मृगः[१६] छागो[१७] नन्द्यावर्त्तो[१८] घटोऽपि[१९] च ।
कूर्मो[२०] नीलोत्पलं[२१] शङ्खः[२२] फणी[२३] सिंहोऽर्हतां[२४] ध्वजाः ॥४७॥

रक्तौ च पद्मप्रभवासुपूज्यौ
शुक्लौ च चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी विनीलौ
श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये ॥ ४८ ॥

उत्सर्प्पिण्यामतीतायां चतुर्विंशतिरर्हताम् ।
केवलज्ञानी[१] निर्वाणी[२] सागरो[३]ऽथ महायशाः[४] ॥ ४९ ॥
विमलः[५] सर्वानुभूतिः[६] श्रीधरो[७] दत्ततीर्थकृत्[८] ।
दामोदरः[९] सुतेजाश्च[१०] स्वाम्यथो[११] मुनिसुव्रतः[१२] ॥ ५० ॥
सुमतिः[१३] शिवगतिश्चैवाऽस्तागो[१५]ऽथ निमीश्वरः[१६] ।
अनिलो[१७] यशोधराख्यः[१८] कृतार्थो[१९]ऽथ जिनेश्वरः[२०] ॥ ५१ ॥
शुद्धमतिः[२१] शिवकरः[२२] स्यन्दनश्चा[२३]थ सम्प्रतिः[२४] ।
भाविन्यान्तु पद्मनाभः[१] शूरदेवः[२] सुपार्श्वकः[३] ॥ ५२ ॥
स्वयंप्रभश्च[४] सर्वानुभूति[५]र्देवश्रुतो[६]दयौ[७] ।
पेढालः[८] पोट्टिलश्चापि[९] शतकीर्तिश्च[१०] सुव्रतः[११] ॥ ५३ ॥
अममो[१२] निष्कषायश्च[१३] निष्पुलाको[१४]ऽथ निर्ममः[१५] ।

[16]चित्रगुप्तः [17]समाधिश्च [18]संवरश्च [19]यशोधरः ॥ ५४ ॥
[20]विजयो [21]मल्लदेवौ[22] चानन्तवीर्यश्च[23] भद्रकृत्[24] ।
एवं सर्वावसर्प्पिण्युत्सर्प्पिणीषु जिनोत्तमाः ॥ ५५ ॥

तेषां च देहोऽद्भुतरूपगन्धो
निरामयः स्वेदलवोज्झितश्च[1] ।
श्वासोऽब्जग[2]न्धो रुधिरामिषन्तु
गोक्षीरधाराधवलं ह्यवि[3]स्रम् ॥ ५६ ॥

आहारनीहारविधिस्त्वदृश्य[4]-
श्चत्वार एतेऽतिशयाः सहोत्थाः ।
क्षेत्रे स्थितिर्योजनमात्रकेऽपि
नृदेवतिर्य्यग्जनकोटि[1]कोटेः ॥ ५७ ॥

वाणी नृतिर्य्यक्सुरलोकभाषा
संवादिनी योजनगामिनी च ।
भामण्डलं चारु च मौलिपृष्ठे
विडम्बिताहर्प्पतिमण्ड[3]लश्रि ॥ ५८ ॥

साग्रे च गव्यूतिशतद्वये रुजो
[5]वैरेतयो[6] मार्य्यतिवृष्ट्यवृष्ट्योः ।

दुर्भिक्षम्[१०]अन्यस्वकचक्रतो भयं[११]
स्यान्नैत एकादश कर्म्मघातजाः ॥ ५९ ॥
खे धर्मचक्रं[१] चमराः[२] सपाद-
पीठं मृगेन्द्रासनमुज्ज्वलं[३] च ।
छत्रत्रयं[४] रत्नमयो ध्वजो[५]ऽङ्घ्रि
न्यासे च चामीकरपङ्कजानि[६] ॥ ६० ॥
वप्रत्रयं[७] चारु चतुर्मुखाङ्गता[८] ।
चैत्यद्रुमो[९]ऽधोवदनाश्च कण्टकाः[१०]
द्रुमानतिर्[११]दुन्दुभिनाद[१२] उच्चकै-
र्वातोऽनुकूलः[१३] शकुनाः प्रदक्षिणाः[१४] ॥ ६१ ॥
गन्धाम्बुवर्ष[१५] बहुवर्णपुष्प-
वृष्टिः[१६] कचश्मश्रुनखाप्रवृद्धिः[१७] ।
चतुर्विधा[१८] मर्त्यनिकायकोटि-
र्जघन्यभावादपि पार्श्वदेशे ॥ ६२ ॥
ऋतूनामिन्द्रियार्थानामनुकूलत्वम्[१९]इत्यमी ।
एकोनविंशतिर्दैव्याश्चतुस्त्रिंशच्च मीलिताः ॥ ६३ ॥

संस्कारवत्त्व[1]मौदात्त्य[2]मुपचारपरीतता[3] ।
मेघगम्भीरघोषत्वं[4] प्रतिनादविधायिता[5] ॥ ६४ ॥
दक्षिणत्व[6]मुपनीतरागत्वञ्च[7] महार्थता[8] ।
अव्याहतत्वं[9] शिष्टत्वं[10] संशयानामसंभवः[11] ॥ ६५ ॥
निराकृतान्योत्तरत्वं[12] हृदयङ्गमतापि[13] च ।
मिथः साकाङ्क्षता[14] प्रस्तावौचित्यं[15] तत्त्वनिष्ठता[16] ॥ ६६ ॥
अप्रकीर्णप्रसृतत्व[17]मस्वश्लाघान्यनिन्दता[18] ।

---

( १ ) संस्कृतादिलक्षणवत्त्वं । ( २ ) उच्चैर्वृत्तिता । ( ३ ) उपचाररहितत्वं । ( ४ ) मेघस्येव गम्भीरशब्दत्वं । (५) प्रतिध्वनियुक्तत्वं । ( ६ ) सरलत्वं । (७) मालवकौशिक्यादिग्रामरागयुक्तत्वं । एते शब्दाश्रया वाग्गुणा ज्ञेयाः अन्ये अर्थाश्रया वाग्गुणा । (८) वृहदभिधेयता । (९) पूर्वापरवाक्यार्थाविरोधित्वादव्याहतत्वं । (१०) अभिमतसिद्धौ वक्तुर्मनोज्ञार्थप्रयोजकत्वं शिष्टतासूचकत्वं वा । ( ११ ) असंदिग्धता । ( १२ ) परदूषणाविषयता । ( १३ ) हृदयग्राह्यत्वं । ( १४ ) परस्परेण पदानां वाक्यानां वा सापेक्षत्वं । ( १५ ) देशकालाद्यनतीतत्वं । ( १६ ) विवक्षितवस्तुस्वरूपानुसारिता । (१७) सुसम्बन्धस्य सतः प्रसरणं । (१८) स्वश्लाघा आत्मोत्कर्षः परनिन्दा च तयोर्विप्रयुक्तत्वं ।

आभिजात्य[१९]मतिस्निग्धमधुरत्वं[२०] प्रशस्यता[२१] ॥ ६७ ॥

अमर्म्मवेधिता[२२]ौदार्य्यं[२३] धर्मार्थप्रतिबद्धता[२४] ।

कारकाद्यविपर्य्यासो[२५] विभ्रमादिवियुक्तता[२६] ॥ ६८ ॥

चित्रकृत्त्व[२७]मद्भुतत्वं[२८] तथानतिविलम्बिता[२९] ।

अनेकजातिवैचित्र्य[३०]मारोपितविशेषता[३१] ॥ ६९ ॥

सत्त्वप्रधानता[३२] वर्णपदवाक्यविविक्तता[३३] ।

अव्युच्छित्ति[३४]रखेदित्वं[३५] पञ्चत्रिंशच्च वाग्गुणाः ॥ ७० ॥

---

(१९) बन्धोः प्रतिपाद्यस्य वा भूमिकानुसारित्वं । (२०) घृतगुडादिवत् सुखकारित्वं । (२१) प्राप्तश्लाघ्यता । (२२) परमर्म्मानुद्घाटनस्वरूपं । (२३) अभिधेयस्यातुच्छता । (२४) धर्मार्थाभ्यामनपेतत्वं । (२५) कारककालवचनलिङ्गादिविपर्य्यासराहित्यं । (२६) मनोदोषवियुक्तत्वं । (२७) उत्पादिताच्छिन्नकुतूहलत्वं । (२८) प्रतीतत्वं । (२९) अनतिविलम्बिता प्रतीता । (३०) अनेकवर्णनीयवस्तुस्वरूपवर्णनसंश्रयादतिविचित्रत्वं । (३१) वचनान्तरापेक्षया आहितविशेषत्वं । (३२) साहसोपतता । (३३) वर्णपदवाक्यानां विच्छिन्नत्वं । (३४) विवक्षितार्थसम्यक्सिद्धिः अव्यवच्छिन्नवचनप्रमेयता । (३५) अनायाससंभवः ।

अन्तराया दानलाभवीर्यभोगोपभोगगाः ।
हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥ ७१ ॥
कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा ।
रागो द्वेषश्च नोदोषास्तेषामष्टादशाप्यमी ॥ ७२ ॥
महानन्दोऽमृतं सिद्धिः कैवल्यमपुनर्भवः ।
शिवं निःश्रेयसं श्रेयो निर्वाणं ब्रह्म निर्वृतिः ॥७३॥
महोदयः सर्वदुःखक्षयो निर्वाणमक्षरम् ।
मुक्तिर्मोक्षोऽपवर्गोऽर्थे मुमुक्षुः श्रमणो यतिः ॥ ७४ ॥
वाचंयमो व्रती साधुरनगार ऋषिर्मुनिः ।
निर्ग्रन्थो भिक्षुरस्य स्वं तपोयोगशमादयः ॥ ७५ ॥
अभाषणं पुनर्मौनं गुरुर्धर्मोपदेशकः ।
मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मकः ॥ ७६ ॥
अनुयोगकृदाचार्य उपाध्यायस्तु पाठकः ।
अनूचानः प्रवचने साङ्गेऽधीती गणिश्च सः ॥ ७७ ॥

---

( १ ) दानगतोऽन्तरायः । ( २ ) लाभगतोऽन्तरायः । ( ३ ) वीर्यगतोऽन्तरायः । ( ४ ) भोगगतोऽन्तरायः । ( ५ ) उपभोगगतोऽन्तरायः । अत्र भोगः स्रगादिः उपभोगोऽङ्गनादिः ।

शिष्यो विनेयोऽन्तेवासी शैक्षः प्राथमकल्पिकः ।
सतीर्थ्यास्त्वेकगुरवो विवेकः पृथगात्मता ॥ ७८ ॥
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ।
स्यात्पारम्पर्यमाम्नायः सम्प्रदायो गुरुक्रमः ॥ ७९ ॥
व्रतादानं परिव्रज्या तपस्या नियमस्थितिः ।
अहिंसा सूनृतोऽस्तेयब्रह्माकिञ्चनता यमाः ॥ ८० ॥
नियमाः शौचसन्तोषौ स्वाध्यायतपसी अपि ।
देवताप्रणिधानञ्च करणं पुनरासनं ॥ ८१ ॥
प्राणायामः प्राणयमः श्वासप्रश्वासरोधनम् ।
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः ॥ ८२ ॥
धारणा तु क्वचिद्ध्येये चित्तस्य स्थिरबन्धनम् ।
ध्यानन्तु विषये तस्मिन्नेकप्रत्ययसन्ततिः ॥ ८३ ॥
समाधिस्तु तदेवार्थमात्राभासनरूपकम् ।
एवं योगो यमाद्यङ्गैरष्टभिः सम्मतोऽष्टधा ॥ ८४ ॥
श्वःश्रेयसं शुभंशिवं कल्याणं श्वोवसीयसं श्रेयः ।
क्षेमं भावुकभविककुशलमङ्गलभद्रमद्रशस्तानि ॥८५॥

इत्याचार्य्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां देवाधिदेवकाण्डः प्रथमः ॥ १ ॥

# ॥ देवकाण्डः ॥

## द्वितीयः ।

स्वर्ग[1]स्त्रिविष्टपं[2] द्यो[3]दिवौ[4]
भुवि[5] स्तविषं[6]ताविषौ[7] नाकः ।
गौ[9]स्त्रिदिवं[10]मूर्द्धलोकः[11]
सुरालय[12]स्तत्सद[*][1]स्त्वमरा[2]: ॥ १ ॥
देवाः[3] सुपर्व[4]सुर[5]निर्जर[6]देवत[7]र्भु[8]-
बर्हिर्मुखा[9]निमिष[10]दैवत[11]नाकि[12]लेखाः[13] ।
वृन्दारकाः[14] सुमनस[15]स्त्रिदशा[16] अमर्त्याः[17]
(१)स्वाहा-स्वधा-क्रतु-सुधा-भुज[21] आदितेयाः[22] ॥ २ ॥
गीर्वाणा[23] मरुतो[24]ऽस्वप्ना[25] विबुधा[26] दानवारयः[27] ।
(२)तेषां यानं[1] विमानो[1]ऽन्धः पीयूष[1]ममृतं[2] सुधा[3] ॥ ३ ॥
असुरा[1] नागा[2]स्तडितः[3] सुपर्णका[4] वह्नयो[5]ऽनिलाः[6] स्तनिताः[7]।

---

* तस्मिन् स्वर्गे सीदन्तीति तत्सदः । स्वर्गसदः यौगिकत्वात् दिविपदः त्रिदिवौकसः द्युसद्मानः इत्यादयो योज्याः । (१) स्वाहाभुजः १८ स्वधाभुजः १९ क्रतुभुजः २० सुधाभुजः २१ अत्र अन्येभ्योपीति क्विप् यौगिकत्वात् स्वाहाशनाः स्वधाशनाः यज्ञाशनाः अमृतान्धसः इत्यादयो यथासम्भवमूह्याः । (२) तेषां देवानां यानं तथा अन्ध. अन्नं ॥

उदधिर्द्वीपदिशो दश भवनाधीशाः कुमारान्ताः[१] ॥ ४ ॥

[२]स्युः पिशाचा भूता यक्षा राक्षसाः किन्नरा अपि ।

किम्पुरुषा महोरगा गन्धर्वा व्यन्तरा अमी ॥ ५ ॥

[३]ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्र-तारकाः ।

वैमा[४]निकाः पुनः कल्पभवा द्वादश ते त्वमी ॥ ६ ॥

[५]सौधर्म्म-शान-सनत्कुमार-

माहेन्द्र-ब्रह्म-लान्तक-जाः ।

शुक्र-सहस्रारा-नत-

प्राणत-जा आरणा-च्युत-जाः ॥ ७ ॥

कल्पातीता नव ग्रैवेयकाः पञ्च त्वनुत्तराः ।

निकायभेदादेवं स्युर्देवाः किल चतुर्विधाः ॥ ८ ॥

आदित्यः सवितार्य्यमा [६]खरसहस्रोष्णांशुरंशू रविः ।

---

(१) कुमार अन्ते येषान्ते कुमारान्ताः असुरकुमारा नागकुमारा सस्या । (२) पिशाचादीनामष्टाना व्यन्तरा इत्येकं । (३) एवं ज्योतिष्का इत्येकम् । (४) द्वादश सौधर्म्मजादीना । (५) सौधर्म्मादिभ्यः षड्भ्यो जा इति योज्यते, सौश्वःश्रेयधर्म्मजा इत्यादि । तथा शुक्रादिभ्यः । आरणाच्युताक्षेमं भानुभ्योऽग्रे अंशुः खरांशुः सहस्रांशुः उष्णांशुः इत्याचार्य्यश्रीरश्मिः खरकिरणः शीतेतररश्मिः इत्यादयः । नाममालायां ।

र्मार्त्तण्डस्तरणिर्गभस्तिररुणो भानुर्नभो-ह(१)-र्मणिः ।
सूर्योऽर्कः किरणो भगो ग्रहपुषः पूषा पतङ्गः खगो
मार्तण्डो यमुना(२)-कृतान्तजनकः प्रद्योतनस्तापनः ॥ ९ ॥

ब्रध्नो हंसश्चित्रभानुर्विवस्वान्
सूरस्त्वष्टा द्वादशात्मा च हेलिः ।
मित्रो ध्वान्तारातिरब्जा(३)-शु-हस्त-
(४)श्चक्राब्जा-ह-र्बान्धवः सप्तसप्तिः ॥ १० ॥

(५)दिवा-दिना-ह-दिवस-प्रभा-विभा
भासः-करः स्यान्मिहिरो विरोचनः ।
(६)ग्रहा-ब्जिनी-गो-द्यु-पतिर्विकर्त्तनो
हरिः शुचीनौ गगना(७)-ध्वजा-ध्वगौ ॥ ११ ॥

हरिदश्वो (८)जगत्कर्म-साक्षी भास्वान् विभावसुः ।

---

(१) नभोऽहोभ्यां मणिः नभोमणिः अहर्मणिरिति च । (२) यमुनाजनकः कृतान्तजनकः । (३) अब्जहस्तः अंशुहस्तः । (४) चक्रबान्धवः अब्जबान्धवः अहर्बान्धवः । (५) दिवाकरः दिनकरः अहस्करः दिवसकरः प्रभाकरः विभाकरः भास्करः । (६) ग्रहपतिः अब्जिनीपतिः गोपतिः द्युपतिः । (७) गगनध्वजः गगनाध्वगः । (८) जगत्साक्षी कर्मसाक्षी ।

त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथिः ॥ १२ ॥
रोचिरुस्रो रुचिः शोचिरंशुर्गो
ज्योतिरर्चिरुपधृत्यभीशवः ।
प्रग्रहः शुचिर्मरीचिर्दीप्तयो
धामकेतुघृणिरश्मिपृश्नयः ॥ १३ ॥
पाददीधितिकरद्युतिद्युतो
रुग्विरोककिरणत्विषित्विषः ।
भाः प्रभावसुगभस्तिभानवो
भा मयूखमहसी छविर्विभा ॥ १४ ॥
प्रकाशस्तेज उद्योत आलोको वर्च आतपः ।
मरीचिका मृगतृष्णा मण्डलं तूपसूर्यकम् ॥ १५ ॥
परिधिः परिवेषश्च सूरसूतस्तु काश्यपिः ।
अनूरुर्विनतासूनुररुणो गरुडाग्रजः ॥ १६ ॥
रेवन्तस्त्वर्करेतोजः प्लवंगो हयवाहनः ।
अष्टादश माठराद्याः सवितुः पारिपार्श्विकाः ॥ १७ ॥
चंद्रमाः कुमुदबान्धवो दश

(१) दशवाजी २ श्वेतवाजी ४ ।

श्वेतवाज्यमृतसूस्तिथिप्रणीः ।
कौमुदी[1]कुमुदिनीभ-दक्षजा–
रोहिणी-द्विज-निशौषधी-पतिः ॥ १८ ॥
जैवातृकोऽब्जश्च कला[2]-शशै-ण–
छाया-भृदिन्दुर्विधुरत्रिदृग्जः ।
राजा निशो[3] रत्नकरौ च चन्द्रः
सोमोऽमृत[4]-श्वेत-हिम-द्युतिर्ग्लौः ॥ १९ ॥
षोडशोंऽशः कला चिह्नं लक्षणं लक्ष्म लांछनम् ।
अङ्कः कलङ्कोऽभिज्ञानं चन्द्रिका चन्द्रगोलिका ॥२०॥
चन्द्रातपः कौमुदी च ज्योत्स्ना बिम्बं तु मण्डलम् ।
नक्षत्रं तारका ताराज्योतिषी भमुडु ग्रहः ॥ २१ ॥

---

( १ ) कौमुदीपतिः ७ कुमुदिनीपतिः ८ भपतिः ९ दक्षजापतिः १० रोहिणीपतिः ११ द्विजपतिः १२ निशापतिः १३ औषधीपतिः १४ ।
( २ ) कलाभृत् १७ शशभृत् १८ एणभृत् १९ छायाभृत् २० ।
( ३ ) निशः सकाशात् रत्नकरौ यथा निशारत्नं २५ निशाकरः २६ ।
( ४ ) अमृतद्युतिः २९ श्वेतद्युतिः ३० हिमद्युतिः ३१ ।

धिष्ण्यमृक्षमथाश्विन्यश्वकिनी दस्रदेवता ।
अश्वयुग् बालिनी चाथ भरणी यमदेवता ॥ २२ ॥
कृत्तिका बहुलाश्चाग्निदेवा ब्राह्मी तु रोहिणी ।
मृगशीर्षं मृगशिरो मार्गश्चान्द्रमसं मृगः ॥ २३ ॥
इल्वलास्तु मृगशिरःशिरःस्थाः पञ्चतारकाः ।
आर्द्रा तु कालिनी रौद्री पुनर्वसू तु यामकौ ॥२४॥
आदित्यौ च पुष्यस्तिष्यः सिध्यश्च गुरुदैवतः ।
सार्पाश्लेषा मघाः पित्र्याः फाल्गुनी योनिदेवता ॥२५॥
सा तूत्तरार्यमदेवा हस्तः सवितृदैवतः ।
त्वाष्ट्री चित्रानिली(१) स्वातिर्विशाखेन्द्राग्निदेवता ॥ २६ ॥
राधानुराधा तु मैत्री ज्येष्ठैन्द्री मूल आश्रपः ।
पूर्वाषाढापी(२) सोत्तरा स्याद्वैश्वी श्रवणः पुनः ॥ २७ ॥
हरिदेवः श्रविष्ठा तु धनिष्ठा वसुदेवता ।

---

( १ ) आनिली इति स्वातेरपरं नाम तत्र देवतेत्यनणन्तत्वाद्वृद्धिः ।
( २ ) आप् इति पूर्वाषाढाया अपरं नाम आपो जलं देवता अस्या इत्याप् पूर्वाषाढा च आप् च पूर्वाषाढापी ।

वारुणी तु शतभिषं (१) गजा-हिर्बुध्न-देवताः ॥ २८ ॥
पूर्वोत्तराभद्रपदा (२) द्वय्यः प्रोष्ठपदाश्च ताः ।
रेवती तु पौष्णं दाक्षायण्यः (३) सर्वाः शशिप्रियाः ॥२९॥
राशीनामुदयो लग्नं मेषप्रभृतयस्तु ते ।
आरो वक्रो लोहिताङ्गो मङ्गलोऽङ्गारकः कुजः ॥३०॥
आषाढाभूर्नवार्च्चिश्च बुधः सौम्यः प्रहर्षुलः ।
ज्ञः पञ्चार्चिः श्रविष्ठाभूः श्यामाङ्गो रोहिणीसुतः ॥३१॥
बृहस्पतिः सुराचार्य्यो जीवश्चित्रशिखण्डिजः ।
वाचस्पतिर्द्वादशार्चिर्धिषणः फाल्गुनीभवः ॥ ३२ ॥
(४) गीर्बृहत्योः पतिरुतथ्यानुजोऽङ्गिरसो गुरुः ।
शुक्रो मघाभवः काव्य उशना भार्गवः कविः ॥३३॥
षोड-शार्च्चिर्दैत्यगुरुर्धिष्ण्यः शनैश्चरः शनिः ।

---

(१) अजदेवता १ पूर्वभाद्रपदा २ प्रौढपदा ३ इति त्रीणि पूर्वाभाद्रपदनक्षत्रस्य । अहिर्बुध्नदेवता १ उत्तरभाद्रपदा २ प्रौढपदा ३ इति त्रीणि उत्तराभाद्रपदनक्षत्रस्य । भाद्रपदा इत्यपि । (२) द्वौ अवयवौ आसां इति द्वय्यः । (३) अश्विन्यादिरेवत्यन्ताः सर्वा नामद्वयवाच्याः । (४) गीष्पतिः ९ बृहस्पतिः १० ।

छायासुतोऽसितः सौरिः सप्तार्च्ची रेवतीभवः ॥ ३४ ॥
मन्दः क्रोडो नीलवासाः स्वर्भानुस्तु विधुन्तुदः ।
तमो राहुः सैंहिकेयो भरणीभूरथाहिकः ॥ ३५ ॥
अश्लेषाभूः शिखी केतुर्ध्रुवस्तूत्तानपादजः ।
अगस्त्योऽगस्तिः पीताब्धिर्वातापिद्विड् घटोद्भवः ॥३६॥
मैत्रावरुणिराग्नेयः और्वशेर्याग्निमारुतौ ।
लोपामुद्रा तु तद्भार्या कौषीतकी वरप्रदा ॥ ३७ ॥
मरीचिप्रमुखाः सप्तर्षयश्चित्रशिखण्डिनः ।
पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ॥ ३८ ॥
राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः ।
उपलिङ्गं त्वरिष्टं स्यादुपसर्ग उपद्रवः ॥ ३९ ॥
अजन्यमीतिरुत्पातो वन्ह्युत्पात उपाहितः ।
स्यात्कालः समयो दिष्टानेहसौ सर्वमूषकः ॥ ४० ॥
कालो द्विविधोऽवसर्प्पिण्युत्सर्प्पिणीविभेदतः ।
सागरकोटीकोटीनां विंशत्या स समाप्यते ॥ ४१ ॥
अवसर्प्पिण्याः षडरा उत्सर्प्पिण्यास्त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम् ॥ ४२ ॥

(१) तत्रैकान्तसुषमाऽरश्चतस्रः कोटिकोटयः ।
सागराणां सुषमा (२) तु तिस्रस्तत्कोटिकोटयः ॥ ४३ ॥
(३) सुषमदुःषमा ते द्वे (४) दुःषमसुषमा पुनः ।
सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥ ४४ ॥
(५) अथ दुःषमैकविंशतिरब्दसहस्राणि तावती तु स्यात् ।
(६) एकान्तदुःषमापि ह्येतत्सङ्ख्याः परेऽपि विपरीताः ॥ ४५ ॥
(७) प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः ।
त्रिद्व्येकगव्यूतोच्छ्रायास्त्रिद्व्येकदिनभोजनाः ॥ ४६ ॥
कल्पद्रुफलसन्तुष्टाश्चतुर्थे त्वरके नराः ।
पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥ ४७ ॥
पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः ॥ ४८ ॥
एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः ।
पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि ॥ ४९ ॥

---

(१) तत्रेति त्रिभिः श्लोकैः षडरानाह । एकान्तसुषमा प्रथमारस्य नाम । (२) सुषमा द्वितीयारस्य नाम । (३) सुषमदुःषमा तृतीयारस्य नाम । (४) दुःषमसुषमा चतुर्थारस्य नाम । (५) दुःषमा पञ्चमारस्य नाम । (६) एकांतदुःषमा षष्ठारस्य नाम । (७) अराणां फलमाह प्रथमेति चतुर्भिः ।

अष्टादशनिमेषाः स्युः काष्ठा काष्ठाद्वयं लवः ।
कला तैः पञ्चदशभिर्लेशस्तद्द्वितयेन च ॥ ५० ॥
क्षणस्तैः पञ्चदशभिः क्षणैः षड्भिश्च नाडिका ।
सा धारिका घकिटा च मुहूर्त्तस्तद्द्वयेन च ॥ ५१ ॥
त्रिंशता तैरहोरात्रस्तत्राहर्दिवसो दिनम् ।
दिवं द्युर्वासरो घस्रः प्रभातं (१)स्यादहर्मुखम् ॥ ५२ ॥
व्युष्टं विभातं प्रत्यूषं कल्यप्रत्युषसी उषः ।
काल्यं मध्याह्नस्तु दिवामध्यं मध्यन्दिनं च सः ॥५३॥
दिनावसानमुत्सूरो विकालसवेली अपि ।
सायं सन्ध्या तु पितृसूस्त्रिसन्ध्यं तूपवैणवम् ॥ ५४ ॥
श्राद्धकालस्तु (२)कुतुपोऽष्टमो भागो दिनस्य यः ।
निशा निशीथिनी रात्रिः शर्वरी क्षणदा क्षपा ॥५५॥
त्रियामा यामिनी भौती तमी तमा विभावरी ।

---

( १ ) प्रातःकालो हि सूर्यार्द्धोदयादारम्य घटिकाषट्कं यावद्भवति ।
( २ ) दिवसस्य योऽष्टमो भागः स श्राद्धकालः कुतपश्च उच्यते इत्यर्थः । दिवसस्य पुराणोक्तानि रौद्रादीनि भगान्तानि पञ्चदशमुहूर्त्तानि तन्मध्ये गणनाक्रमेण योऽष्टमो मुहूर्त्तः स कुतुप उच्यते । तत्प्रयोजनं च श्राद्धे अन्यकर्मणि अष्टमो मुहूर्त्तः अभिजिदाख्य एव ।

रजनी वसती श्यामा वासतेयी तमस्विनी ॥ ५६ ॥
उषा दोषेन्दुकान्ताऽथ तमिस्रा दर्शयामिनी ।
ज्यौत्स्नी तु पूर्णिमारात्रिर्गणरात्रो निशागणः ॥ ५७ ॥
पक्षिणी पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशा ।
गर्भकं रजनीद्वन्द्वं प्रदोषो यामिनीमुखम् ॥ ५८ ॥
यामः प्रहरो निशीथस्त्वर्धरात्रो महानिशा ।
उच्चन्द्रस्त्वपररात्रस्तमिस्रं तिमिरं तमः ॥ ५९ ॥
ध्वान्तं भूच्छायान्धकारं तमसं (१) सम-वा-न्धतः ।
तुल्यनक्तन्दिने काले विषुवद्विषुवं च तत् ॥ ६० ॥
पञ्चदशाहोरात्रः स्यात्पक्षः स बहुलोऽसितः ।
तिथिः पुनः कर्म्मवाटी प्रतिपत्पक्षतिः समे ॥ ६१ ॥
पञ्चदश्यौ यज्ञकालौ पक्षान्तौ पर्वणी अपि ।
तत्पर्व्वमूलं भूतेष्टापञ्चदश्योर्यदन्तरम् ॥ ६२ ॥
स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।
पूर्णिमा पौर्णमासी सा राका पूर्णे निशाकरे ॥ ६३ ॥
कलाहीने त्वनुमतिर्मार्गशीर्ष्याग्रहायणी ।

---

( १ ) सम-वा-न्धतः तमसं यथा संततमसं ७ अवतमसं ८ अन्धतमसं ९।

अमामावस्यमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ६४ ॥
अमावास्यामावासी च सा नष्टेन्दुः कुहुः कुहूः ।
दृष्टेन्दुस्तु सिनीवाली भूतेष्टा तु चतुर्दशी[2] ॥ ६५ ॥
पक्षौ मासो वत्सरादिर्मार्गशीर्षः[2] सहः (१) सहाः ।
आग्रहायणिकश्चाथ पौषस्तैषः सहस्यवत् (२) ॥ ६६ ॥
माघस्तपाः (३)[2] फाल्गुनस्तु फाल्गुनिकस्तपस्यवत् ।
चैत्रो[1] मधुश्चैत्रिकश्च वैशाखे राधमाधवौ[3] ॥ ६७ ॥
(४) ज्येष्ठस्तु शुक्रोऽथाषाढः शुचिः स्याच्छ्रावणो नभाः ।
श्रावणिकोऽथ नभस्यः प्रौष्ठभाद्र(५)परः पदः ॥ ६८ ॥
भाद्रश्चाप्याश्विने[1] त्वाश्वयुजे(६)षावथ कार्त्तिकः ।
कार्त्तिकिको बाहुलोर्ज्यौ[4] द्वौ द्वौ मार्गादिकावृतुः ६९
हेमन्तः प्रशलो रौद्रोऽथ शैषशिशिरौ[2] समौ ।
वसन्त इष्यः सुरभिः पुष्पकालो बलाङ्गकः ॥ ७० ॥

---

( १ ) सहः अकारान्तोऽयं देववत् । ( २ ) सहस्यवत् यथा सहस्यः पौषवाची तथा तैषोऽपीत्यर्थः । ( ३ ) तपाः सकारान्तः चन्द्रमस्शब्दवत् । (४) ज्येष्ठ इत्यत्र ज्यैष्ठोऽपि यन्महेश्वर आह, "ज्येष्ठे ज्यैष्ठोऽपि दृश्यते ॥ इति । (५) प्रौष्ठपदः भाद्रपदः । (६) आश्वयुजः अकारान्तो देवशब्दवत् ।

उष्ण उष्णागमो ग्रीष्मो निदाघस्तप[१] उष्मकः ।
[२]वर्षास्तपात्ययः प्रावृण् मेघात्[३]कालागमौ क्षरी ॥ ७१ ॥
शरद् घनात्ययोऽयनं शिशिराद्यैस्त्रिभिस्त्रिभिः ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ ७२ ॥
[४] सं-पर्य्य-नूदूभ्यो वर्षं हायनोऽब्दः समा[५] शरत् ।
भवेत्पैत्रं त्वहोरात्रं मासेनाब्देन दैवतम् ॥ ७३ ॥
दैवे युगसहस्रे द्वे ब्राह्मं कल्पौ तु ते[६] नृणाम् ।
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥ ७४ ॥
कल्पो युगान्तः कल्पान्तः संहारः प्रलयः क्षयः ।
संवर्त्तः परिवर्त्तश्च समसुप्तिर्जिहानकः ॥ ७५ ॥
तत्कालस्तु तदात्वं स्यात्तज्जं सान्दृष्टिकं फलम् ।
आयतिस्तूत्तरः काल उदर्कस्तद्भवं फलम् ॥ ७६ ॥
व्योमान्तरिक्षं गगनं घनाश्रयो
विहाय आकाशं मनन्तपुष्करे ।

---

(१) तपः अकारान्तो देवशब्दवत् । (२) वर्षाः नित्यबहुवचनान्तः त्रीलिङ्गः । (३) मेघकालः ४ मेघागमः ५ । (४) संवत्सरः २ परि-त्सरः ३ अनुवत्सरः ४ उद्वत्सरः ५ । (५) समा स्त्रियामावन्तो विकल्पेन हुवचनान्तः । (६) ते द्वे युगसहस्रे नृणां कल्पावित्युच्यते ।

अभ्रं सुरा[1]-भ्रो-डु-मरु-त्पथोऽम्बरं
खं द्योदिवौ विष्णुपदं वियन्नभः ॥ ७७ ॥
नभ्राट् तडित्वान्मुदिरो घनाघनोऽ-
भ्रं धूमयोनिस्तनयित्नुमेघाः ।
जीमूतपर्जन्यबलाहका घनो
धाराधरो वाह-द-मुग्-धरा जलात्[2] ॥ ७८ ॥
कादम्बिनी मेघमाला दुर्दिनं मेघजं तमः ।
आसारो वेगवान् वर्षो वातास्तं[3] वारि शीकरः ॥ ७९ ॥
वृष्ट्यां वर्षणवर्षे तद्विघ्ने ग्राह-ग्रहाववात्[4] ।
घनोपलस्तु करकः[5] काष्ठाशा दिग् हरि-त्ककुप् ॥ ८० ॥
पूर्वा प्राची दक्षिणाऽपाची प्रतीची तु पश्चिमा ।
अपराथोत्तरोदीची विदिक् त्वपदिशं प्रदिक् ॥८१॥
दिश्यं दिग्भववस्तुन्यपागपाचीनं उदगुदीचीनम् ।

---

(१) सुरपथः१० अभ्रपथः ११ उडुपथः १२ मरुत्पथः १३ । (२) जलवाहः १४ जलदः १५ जलमुग् १६ जलधरः १७ (३) वातेन अस्तं क्षिप्तं वातास्तं । (४) अवात् ग्राह-ग्रहौ यथा अवग्राहः अवग्रहः २ । (५) करकशब्दस्त्रिलिङ्गः ।

प्राक्[१] प्राचीनं[२] च समे प्रत्यक्[१] तु स्यात्प्रतीचीनम्[२] ८२
तिर्य्यग्दिशां तु पतय इन्द्रा[१]ग्नि[२]यम[३]नैर्ऋतौ[४]: ।
वरुणो[५] वायु[६]कुबेरा[७]वीशान[८]श्च यथाक्रमम् ॥ ८३ ॥
ऐरावतः[१] पुण्डरीको[२] वामनः[३] कुमुदो[४]ऽञ्जनः[५] ।
पुष्पदन्तः[६] सार्व्वभौमः[७] सुप्रतीक[८]श्च दिग्गजाः ॥ ८४ ॥
इन्द्रो[१] हरि[२]र्दुश्च्यवनो[३]ऽच्युताग्रजो[४]
वज्री[५] बिडौजा[६] मघवान्[७] पुरन्दरः[८] ।
प्राचीनबर्हिः पुरुहूत[१०]वासवौ[११]
सङ्क्रन्दना[१२]खण्डल[१३]मेघवाहनाः[१४] ॥ ८५ ॥
सुत्रामवा[१५]स्तोष्पति[१६]दल्मि[१७]शक्राः[१८]
वृषो[१९] सुनासीर[२०]सहस्रनेत्रौ[२१]
पर्ज्जन्य[२२]हर्य्यश्व[२३]ऋभुक्षि[२४]बाहु-
दन्तेय[२५]वृद्धश्रवस[२६]स्तुराषाट्[२७] ॥ ८६ ॥
सुरर्षभ[२८]स्तपस्तक्षो[२९] जिष्णु[३०]र्वर[(१)]शतक्रतु[३२]: ।
कौशिकः[३३] पूर्वदिग्-देवाप्सरःस्वर्ग-शची-पतिः[३४][(२)] ॥८७॥

---

( १ ) वरक्रतुः ३१ शतक्रतुः ३२ ( २ ) पूर्वदिक्पतिः ३४ देवपतिः ३५ अप्सरःपतिः ३६ स्वर्गपतिः ३७ शचीपतिः ३८ ।

पृतनाषाडुग्रधन्वा मरुत्वान्मघवाऽस्य तु ।
द्विषः पाकोऽद्रयो वृत्रः पुलोमा नमुचिर्बलः ॥ ८८ ॥
जम्भः प्रिया शचीन्द्राणी पौलोमी जयवाहिनी ।
तनयस्तु जयन्तः स्याज्जयदत्तो जयश्च सः ॥ ८९ ॥
सुता जयन्ती तविषी ताविष्युच्चैःश्रवा हयः ।
मातलिः सारथिर्देवनन्दी द्वाःस्थो गजः पुनः ॥९०॥
ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदरः ।
ऐरावतो हस्तिमल्लः श्वेतगजोऽभ्रमुप्रियः ॥ ९१ ॥
वैजयन्तौ तु प्रासादध्वजौ पुर्य्यमरावती ।
सरो नान्दीसरः पर्षत्सुधर्मा नन्दनं वनम् ॥ ९२ ॥
वृक्षाः कल्पः पारिजातो मन्दारो हरिचन्दनः ।
सन्तानश्च धनुर्देवायुधं तदृजु रोहितम् ॥ ९३ ॥
दीर्घञ्चैरावतं वज्रं त्वशनिर्ह्रादिनी स्वरुः ।
शतकोटिः पविः शम्बो दम्भोलिर्भिदुरं भिदुः ॥ ९४ ॥
व्याधामः कुलिशोऽस्यार्चिरतिभीः स्फूर्जथुर्ध्वनिः ।

स्वर्वैद्यावश्विनीपुत्रावश्विनौ(१) वडवासुतौ ॥ ९५ ॥
नासिक्यावर्कजौ दस्रौ नासत्यावब्धिजौ यमौ ।
विश्वकर्मा पुनस्त्वष्टा विश्वकृद्देववर्द्धकिः ॥ ९६ ॥
स्वःस्वर्गिवध्वोऽप्सरसः(२) स्ववेश्या उर्व्वशीमुखाः ।
हाहादयस्तु गन्धर्व्वा गान्धर्व्वा देवगायनाः ॥ ९७ ॥
यमः कृतान्तः पितृ(३)दक्षिणाशा-
प्रेतात्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्त्तिकालौ
शीर्णाङ्घ्रिहर्य्यन्तकधर्म्मराजाः ॥ ९८ ॥
यमराजः श्राद्धदेवः शमनो महिषध्वजः ।
कालिन्दीसोदरश्चापि धूमोर्णा तस्य वल्लभा ॥ ९९ ॥
पुरी पुनः संयमनी प्रतीहारस्तु वैध्यतः ।
दासौ चण्डमहाचण्डौ चित्रगुप्तस्तु लेखकः ॥ १०० ॥
स्याद्राक्षसः पुण्यजनो नृचक्षा

---

(१) अश्वौ विद्येतेऽनयोरिति अश्विनौ सदाश्वाधिरूढावित्यर्थः । इन् प्रत्ययान्तोऽयं नित्यं द्विवचनान्तश्च एते पुंसि । (२) स्वर्वध्वः १ स्वर्गिवध्वः २ । (३) पितृपतिः ३ दक्षिणाशापतिः ४ प्रेतपतिः ५ ।

यात्वाशरः कौणपयातुधानौ ।
रात्रिञ्चरो रात्रिचरः पलादः
कीनाशरक्षो निकसात्मजाश्च ॥ १०१ ॥
क्रव्यात्कर्बुरनैर्ऋतावसृक्पो
वरुणस्त्वर्णवमन्दिरः प्रचेताः ।
जल-यादःपतिपाशिमेघनादा
जलकान्तारः स्यात्परञ्जनश्च ॥ १०२ ॥
श्रीदः सितोदरकुहेशसखाः पिशाच
कीच्छावसुस्त्रिशिर ऐलविलैकपिङ्गाः
पौलस्त्यवैश्रवणरत्नकराः कुबेर
यक्षौ नृधर्मधनदौ नरवाहनश्च ॥ १०३ ॥
कैलासौका यक्ष-धन-निधि-किम्पुरुषे-श्वरः ।
विमानं पुष्पकं चैत्ररथं वनं पुरी प्रभा ॥ १०४ ॥

---

( १ ) यातु यातुनी यातूनि पुंस्यपि। यदाह धनपालः "क्रव्यादा यातवो यातुधानाः" इति। ( २ ) जलपतिः ४ यादःपतिः ४ । ( ३ ) यक्षेश्वरः १९ धनेश्वरः २० निधीश्वरः २१ किम्पुरुषेश्वरः २२ ।

अलका[1] वस्वोकसारा[2] सुतोऽस्य नलकूबरः ।
वित्तं[1] रिक्थं[2] स्वापतेयं[3] राः[4] सारं[5] (1) विभवो[6] वसु[7] १०५
द्युम्नं[8] द्रव्यं[9] पृक्थं[10] मृक्थं[11] स्वमृक्णं[12] [13] द्रविणं[14] धनम्[15] ।
हिरण्या[16]र्थौ[17] निधानं[1] तु कुनाभिः[2] शेवधि[3]र्निधिः[4] १०६
महापद्मश्च[1] पद्मश्च[2] शङ्खो[3] मकर[4]कच्छपौ[5] ।
मुकुन्द[6]कुन्द[7]नीलाश्च[8] चर्चाश्च[9] (2) निधयो नव ॥ १०७ ॥
यक्षः[1] पुण्यजनो[2] राजा[3] गुह्यको[4] वटवास्यपि[5] ।
किन्नरस्तु[1] किम्पुरुष[2]स्तुरङ्गवदनो[3] मयुः[4] ॥ १०८ ॥

शम्भुः[1] शर्वः[2] स्थाणु[3]रीशान[4] ईशो[5]
रुद्रो[6]ड्डीशौ[7] वामदेवो[8] वृषाङ्कः[9] ।
कण्ठेकालः[10] शङ्करो[11] नीलकण्ठः[12]
श्रीकण्ठो[13]ग्रौ[14] धूर्जटि[15]र्भीम[16]-भर्गौ[17] ॥ १०९ ॥
मृत्युञ्जयः[18] पञ्च (3) मुखोऽष्टमूर्त्तिः[20]
श्मशानवेश्मा[21] गिरिशो[22] गिरीशः[23] ।

---

(१) सारः पुंस्यपि । यदाह धनपालः "सारोऽर्थो द्रविणं धनं" । (२) चर्चाः चर्चसौ चर्चसः इत्यादि । (३) सद्योजातः १ वामदेवः २ अघोरः ३ तत्पुरुषः ४ ईशानः ५ इति पञ्चमुखानि ।

षण्ढः[२४] कपर्दी[२५]श्वर[२६] उर्ध्वलिङ्ग[२७]
एक(१)-त्रि-दृक्[२९] भालदृगे[३०]कपादः[३१] ॥ ११० ॥
मृडो[३२]ऽट्टहासी[३३] घनवाहनो[३४]ऽहि-
र्बुध्नो[३५] विरूपा[३६]क्षविषान्तकौ[३७] च ।
महाव्रतो[३८] (२)वह्नि-हिरण्यरेताः[४०]
शिवो[४१]स्थिधन्वी[४२] पुरुषास्थिमाली[४३] ॥ १११ ॥
स्याद् व्योमकेशः[४४] शिपिविष्ट[४५]भैरवौ[४६]
दिक्(३)-कृत्ति-वासा भव[४९]नीललोहितौ[५०] ।
सर्वज्ञ[५१]-नाट्यप्रिय[५२]खण्डपर्शवो[५३]
महा(४)परा देव-नटे-श्वरा[५६] हरः[५७] ॥ ११२ ॥
पशु(५)-प्रमथ-भूतो-मा-पतिः[६१] पिङ्ग(६)-जटेक्षणः[६३] ।
पिनाक(७)-शूल-खट्वाङ्ग-गङ्गा-ही-न्दु-कपाल-भृत्[७०] ॥११३॥

---

(१) एकदृक् २८ त्रिदृक् २९ । (२) वह्निरेताः ३९ हिरण्यरेता. ४० । (३) दिग्वासाः ४७ कृत्तिवासाः ४८ । (४) महादेवः ५४ महानटः ५५ महेश्वरः ५६ । (५) पशुपतिः ५८ प्रमथपतिः ५९ भूतपतिः ६० उमापतिः ६१ (६) पिङ्गेक्षणः ६२ जटेश्वरः ६४। (७) पिनाकभृत् ६४ शूलभृत् ६५ खट्वाङ्गभृत् ६६ गङ्गाभृत् ६७ अहिभृत् ६८ इन्दुभृत् ६९ कपालभृत् ७० ।

(१)गज-पूष-पुरा-नङ्ग-काला-न्धक-मखाऽसुहृद्[७७] ।
कपर्दोऽस्य[१] जटाजूटः[२] खट्वाङ्गस्तु[१] सुखं[२] सुणः[३] ॥११४॥
पिनाकं[१] स्यादाजगवम्[२]जकावं[३] च तद्धनुः ।
ब्राह्माद्या मातरः[१] सप्त प्रमथाः[१] पार्षदाः[२] गणाः[३] ॥११५॥
लघिमा[१] वशिते[२]शित्वं[३] प्राकाम्यं[४] महिमा[५]ऽणिमा[६] ।
यत्र कामावसायित्वं[७] प्राप्ति[८]रैश्वर्यमष्टधा ॥ ११६ ॥

गौरी[१] काली[२] पार्वती[३] मातृमातौ[४]-
ऽपर्णा[५] रुद्राण्य[६]म्बिका[७] त्र्यम्बको[८]मा[९] ।
दुर्गा[१०] चण्डी[११] सिंहयाना[१२] मृडानी[१३]
कात्यायन्यौ[१४] दक्षजा[१५]र्या[१६] कुमारी[१७] ॥ ११७ ॥

सती[१८] शिवा[१९] महादेवी[२०] शर्वाणी[२१] सर्वमङ्गला[२२] ।
भवानी[२३] कृष्ण(२)-मैनाक-स्वसा[२५] मेना(३)द्रिजेश्वरा[२८] ॥११८॥
निशुम्भ(४)-शुम्भ-महिष-मथनी[३१] भूतनायिका[३२] ।

---

( १ ) गजासुहृद् ७१ पूषासुहृद् ७२ पुरासुहृद् ७३ अनङ्गासुहृद् ७४ कालासुहृद् ७५ अन्धकासुहृद् ७६ मखासुहृद् ७७ । ( २ ) कृष्णस्वसा २४ मैनाकस्वसा २५ । ( ३ ) मेनाजा २६ अद्रिजा २७ । ( ४ ) निशुम्भमथनी २९ शुम्भमथनी ३० महिषमथनी ३१ ।

तस्याः सिंहो मनस्तालः सख्यौ तु विजया जया ॥११९॥
चामुण्डा चर्च्चिका चर्म्ममुण्डा मार्ज्जारकर्णिका ।
कर्णमोटी महागन्धा भैरवी च कपालिनी ॥१२०॥
हेरम्बो गण-(१)-विघ्नेशः पार्शुपाणिर्विनायकः ।
द्वैमातुरो गजास्यैकदन्तौ लम्बोदराखुगौ ॥१२१॥
स्कन्दः स्वामी महासेनः सेनानीः शिखिवाहनः ।
षाण्मातुरो ब्रह्मचारी गङ्गो-(२)-मा-कृत्तिका-सुतः ॥१२२॥
द्वादशाक्षो महातेजाः कुमारः षण्मुखो गुहः ।
विशाखः शक्तिभृत् क्रौञ्च-(३)-तारकारिः शरा-(४)-ग्नि-भूः १२३
भृङ्गी भृङ्गिरिटिर्भृङ्गिरीटिर्नाड्य-(५)-स्थि-विग्रहः ।
(६) कूष्माण्डके केलिकिलो (७) नन्दीशे तण्डु-नन्दिनौ ॥१२४॥
द्रुहिणो विरिञ्चिर्द्रुघणो विरिञ्चः

---

(१) गणेश. २ विघ्नेश. ३ । (२) गङ्गासुतः ८ उमासुतः ९ कृत्तिकासुत १० । (३) क्रौञ्चारिः १८ तारकारि १९ (४) शरभूः २० अग्निभू २१ । (५) नाडीविग्रह ४ अस्थिविग्रह ५ । (६) कूष्माण्डकेलिकिलौ गणसेवकौ । (७) नन्दी इन्नन्तः इकारान्तोऽपि नन्दिर्हरिवत् ।

परमेष्ठ्य[५]जो[६]ऽष्टश्रवणः[७] स्वयम्भूः[८] ।
कमनः[९] कविः[१०] सात्विक[११]वेदगर्भौ[१२]
स्थविरः[१३] शतानन्द[१४]पितामहौ[१५] कः[१६] ॥ १२५ ॥
धाता[१७] विधाता[१८] विधि[१९]वेधसौ[२०] ध्रुवः[२१]
पुराणगो[२२] हंसग[२३]विश्वरेतसौ[२४] ।
प्रजापति[२५]र्ब्रह्म[२६]चतुर्मुखौ[२७] भवा-
न्तकृ[२८]ज्जगत्कर्तृ[२९]सरोरुहासनौ[३०] ॥ १२६ ॥
शम्भुः[३१] शतधृतिः[३२] स्रष्टा[३३] सुरज्येष्ठो[३४] विरिञ्चनः[३५] ।
हिरण्यगर्भो[३६] लोकेशो[३७] (१)नाभि-पद्मा-त्म-भूरपि ॥१२७॥
विष्णु[१]र्जिष्णु[२]जनार्दनौ[३] हरि[४]र्हृषीकेशो[५]ऽच्युतः[६] केशवो[७]
दाशार्हः[८] पुरुषोत्तमो[९]ऽब्धिशयनो[१०]पेन्द्रा[११]वजेन्द्रा[१२]नुजौ[१३] ।
विष्वक्सेन[१४]नरायणौ[१५] जलशयो[१६] नारायणः[१७] श्रीपति-[१८]
र्दैत्यारि[१९]श्च (२)पुराण[२०]-यज्ञ-पुरुष[२१]स्तार्क्ष्यध्वजो[२२]ऽधोक्षजः[२३] ॥१२८
गोविन्द[२४]षड्बिन्दु[२५]मुकुन्द[२६]कृष्णा[२७]
वैकुण्ठ[२८]पद्मेशय[२९]पद्मनाभाः[३०] ।

---

( १ ) नाभिभूः ३८ पद्मभूः ३९ आत्मभूः ४० । ( २ ) पुराणपु-
रुषः २० यज्ञपुरुषः २१ ।

वृषाकपि[31]र्माधव[32]र्वासुदेवौ[33]
विश्वम्भर[34]ः श्रीधर[35]विश्वरूपौ[36] ॥ १२९ ॥
दामोदर[37]ः शौरि[38]स्सनातनौ[39] विधु[40]ः
पीताम्बरो[41] मार्ज्ज[42]जिनौ[43] कुमोदक[44]ः ।
त्रिविक्रमो[45] जह्नु[46]चतुर्भुजौ[47] पुन-
र्वसु[48]ः शतावर्त्त[49]गदाग्रजौ[50] स्वभू[51]ः ॥ १३० ॥
मुञ्जकेशि[52]वनमालि[53]पुण्डरी-
काक्ष[54]बभ्रु[55]शशबिन्दु[56]वेधस[57]ः ।
पृश्निगर्भ[58]धरणीधरा[59]त्मभू[60]-
पाण्डवायन[61]सुवर्णबिन्दव[62]ः ॥ १३१ ॥
श्रीवत्सो[63] देवकीसूनु[64]र्गोपेन्द्रो[65] त्रिष्टरश्रवाः[66] ।
सोमसिन्धु[67]र्जगन्नाथो[68] गोवर्द्धनधरो[69]ऽपि च ॥ १३२ ॥
यदुनाथो[70] गदा(१)शार्ङ्ग-चक्र-श्रीवत्स-शङ्ख-भृत् ।
मधु[1]धेनुक[2]चाणूर[3]पूतना[4]यमलार्जुना[5]ः ॥ १३३ ॥
कालनेमि[6]हयग्रीव[7]शकटा[8]रिष्ट[9]कैटभा[10]ः ।

---

(१) गदाभृत् ७१ शार्ङ्गभृत् ७२ चक्रभृत् ७३ श्रीवत्सभृत् ७४ शङ्खभृत् ७५ यौगिकत्वात् गदाधर शार्ङ्गपाणिरित्यादिश्च ।

कंस[११]केशि[१२]मुरा[१३]ः साल्व[१४]मैन्द[१५]द्विविद[१६]राहवः[१७] ॥ १३४ ॥
हिरण्यकशिपु[१८]र्बाणः[१९] कालीयो[२०] नरको[२१] बलिः[२२] ।
शिशुपाल[२३]श्चास्य वध्या वैनतेयस्तु वाहनम् ॥ १३५ ॥
शङ्खोऽस्य पाञ्चजन्यो[१]ऽङ्कः श्रीवत्सो[(१)]ऽसिस्तु नन्दकः[१] ।
गदा कौमोदकी[१] चापं शार्ङ्गं[१] चक्रं सुदर्शनम्[(२)१] ॥ १३६ ॥
मणिः[१] स्यमन्तको[२] हस्ते भुजमध्ये तु कौस्तुभः[१] ।
वसुदेवो[१] भूकश्यपो[२] दुन्दु[३]रानकदुन्दुभिः[४] ॥ १३७ ॥

रामो[१] हली[२] मुसलि-सात्वत[३]कामपाला[४]ः
सङ्कर्षणः[५] प्रियमधु[६]र्बल[७]रौहिणेयौ[८] ।
'(३)रुक्मि[१०]प्रलम्ब[११]यमुनाभि[१२]दनन्त[१३]-ताल-
लक्ष्मैक[१४]कुण्डल[१५]सितासित[१६]-रेवतीशाः[१७] ॥ १३८ ॥

बलदेवो[१८] बलभद्रो[१९] नीलवस्त्रो[२०]ऽच्युताग्रजः[२१] ।
मुशलं[१] त्वस्य सौनन्दं[२] हलं संवर्त्तकाह्वयम्[(४)३] ॥ १३९ ॥

---

( १ ) श्रीवत्सस्तु विष्णुहृदये रोम्णो दक्षिणावर्त्तः । (२) वाचस्पतिस्तु चक्रं सुदर्शनोऽस्त्रियामित्याह । ( ३ ) रुक्मिभित् १० प्रलम्बभित् ११ यमुनाभित् १२ । ( ४ ) संवर्त्तकं क्लीबे ।

वृषाकपिर्माधववासुदेवौ
विश्वम्भरः श्रीधरविश्वरूपौ ॥ १२९ ॥
दामोदरः शौरिसनातनौ विधुः
पीताम्बरो मार्ज्जजिनौ कुमोदकः ।
त्रिविक्रमो जह्नुचतुर्भुजौ पुन-
र्वसुः शतावर्त्तगदाग्रजौ स्वभूः ॥ १३० ॥
मुञ्जकेशिवनमालिपुण्डरी-
काक्षबभ्रुशशबिन्दुवेधसः ।
पृश्निगर्भधरणीधरात्मभू-
पाण्डवायनसुवर्णबिन्दवः ॥ १३१ ॥
श्रीवत्सो देवकीसूनुर्गोपेन्द्रो विष्टरश्रवाः ।
सोमसिन्धुर्जगन्नाथो गोवर्द्धनधरोऽपि च ॥ १३२ ॥
यदुनाथो (१)गदाशार्ङ्ग-चक्र-श्रीवत्स-शङ्ख-भृत् ।
मधुधेनुकचाणूरपूतनायमलार्ज्जुनाः ॥ १३३ ॥
कालनेमिहयग्रीवशकटारिष्टकैटभाः ।

---

(१) गदाभृत् ७१ शार्ङ्गभृत् ७२ चक्रभृत् ७२ श्रीवत्सभृत् ७४ शङ्खभृत् ७५ यौगिकत्वात् गदाधर शार्ङ्गपाणिरित्यादिश्च ।

कंसकेशिमुराः साल्वमैन्दद्विविदराहवः ॥ १३४ ॥
हिरण्यकशिपुर्बाणः कालीयो नरको बलिः ।
शिशुपालश्चास्य वध्या वैनतेयस्तु वाहनम् ॥ १३५ ॥
शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सो[1]ऽसिस्तु नन्दकः ।
गदा कौमोदकी चापं शार्ङ्गं चक्रं सुदर्शनम्[2] ॥१३६॥
मणिः स्यमन्तको हस्ते भुजमध्ये तु कौस्तुभः ।
वसुदेवो भूकश्यपो दुन्दुरानकदुन्दुभिः ॥ १३७ ॥

रामो हली मुसलि-सात्वतकामपालाः
सङ्कर्षणः प्रियमधुर्बलरौहिणेयौ ।
[3]रुक्मिप्रलम्बयमुनाभिदनन्त-ताल-
लक्ष्मैककुण्डलसितासित-रेवतीशाः ॥ १३८ ॥

बलदेवो बलभद्रो नीलवस्त्रोऽच्युताग्रजः ।
मुशलं त्वस्य सौनन्दं हलं सं[4]वर्त्तकाह्वयम् ॥ १३९ ॥

---

( १ ) श्रीवत्सस्तु विष्णुहृदये रोम्णो दक्षिणावर्त्तः । (२) वाचस्पतिस्तु चक्रं सुदर्शनोऽस्त्रियामित्याह । ( ३ ) रुक्मिभित् १० प्रलम्बभित् ११ यमुनाभित् १२ । ( ४ ) सवर्त्तकं क्लीबे ।

(१)लक्ष्मीः पद्मा रमा या मा ता सा श्रीः कमलेन्दिरा ॥
हरिप्रिया पद्मवासा क्षीरोदतनयाऽपि च ॥ १४० ॥

मदनोऽजराभीरुरनङ्गमन्मथौ
कमनः कलाकेलिरनन्यजोऽङ्गजः ।
मधुदीपमारौ मधुसारथिस्स्मरौ
विषमायुधो दर्पककामहृच्छयाः ॥ १४१ ॥

प्रद्युम्नः श्रीनन्दनश्च कन्दर्पः पुष्पकेतनः ।
(२)पुष्पाण्यस्येषुचापास्त्राण्यरी (३)शम्बरशूर्पकौ ॥ १४२ ॥
(४)केतनं मीनमकरौ बाणाः पञ्च रतिः प्रिया ।

---

( १ ) अत्रश्लोके या इत्यस्य, ई, आ, इति छेदः ई अत्र धवयोगादिति ङी प्रत्ययः आ इत्ययं आवन्तो गङ्गावत् । या इत्यखंडमपि तथा च विश्वशम्भुः "या रमामातृष्विति" । ( २ ) अस्य मदनस्य पुष्पाणि इषुचापास्त्राणि तत्साहचर्येणापि कामनामानि भवंति यथा पुष्पेषुः पुष्पचापः पुष्पास्त्रः इत्यादि । ( ३ ) शम्बरारिः शूर्पकारिः इत्यपि । ( ४ ) यथा मीनकेतनः मकरकेतनः पञ्चबाणः रतिप्रियः इत्यादयो बोध्याः ।

मनः शृङ्गारसङ्कल्पात्मानो योनिः सुहृन्मधुः ॥१४३॥
सुतोऽनिरुद्धऋष्याङ्क उषेशो ब्रह्मसूश्च सः ।
गरुडः शाल्मल्यरुणावरजो विष्णुवाहनं ॥ १४४ ॥

सौपर्णेयो वैतनेयः सपर्णः
सर्पारातिर्वज्रिजिद्वज्रतुण्डः ।
पक्षिस्वामी काश्यपिः स्वर्णकाय-
स्तार्क्ष्यः कामायुर्गरुत्मान् सुधाहृत् ॥ १४५ ॥

बुद्धस्तु सुगतो धर्म्मधातुस्त्रिकालविज्जिनः ।
बोधिसत्त्वो महाबोधिरार्य्यः शास्ता तथागतः ॥१४६॥
पञ्चज्ञानः षडभिज्ञो दशार्हो दशभूमिगः ।
चतुस्त्रिंशज्जातकज्ञो दशपारमिताधरः ॥ १४७ ॥
द्वादशाक्षो दशबलस्त्रिकायः श्रीघनाद्वयौ ।
समन्तभद्रः सङ्गुप्तो दयाकूर्च्चो विनायकः ॥ १४८ ॥
मार-लोक-ख-जिद्धर्म्मराजो विज्ञानमातृकः ।

---

(१) यथा मनोयोनिः शृङ्गारयोनिः सङ्कल्पयोनिः आत्मयोनि. इत्यादि।
(२) यथा मधुसुहृद् । (३) मारजित् २६ लोकजित् २७ खजित् २८ ।

महामैत्रो मुनीन्द्रश्च बुद्धाः स्युः सप्त ते त्वमी ॥१४९॥
विपश्यी शिखी विश्वभूः ककुच्छन्दश्च काञ्चनः ।
काश्यपश्च सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः ॥१५०॥
तथा राहुलसूः सर्वार्थसिद्धो गोतमान्वयः ।
माया-सुद्धोदन-सुतो देवदत्ताग्रजश्च सः ॥ १५१ ॥
असुरा दितिदनुजाः पातालौकःसुरारयः ।
पूर्वदेवाः शुक्रशिष्या विद्यादेव्यस्तु षोडश ॥१५२॥
रोहिणी प्रज्ञप्तिर्वज्रश्रृङ्खला कुलिशाङ्कुशा ।
चक्रेश्वरी नरदत्ता काल्यथासौ महापरा ॥ १५३ ॥
गौरी गान्धारी सर्वास्त्रमहाज्वाला च मानवी ।
वैरोट्याच्छुप्ता मानसी महामानसिकेति ताः ॥१५४॥
वाग् ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती ।
श्रुतदेवी वचनं तु व्याहारो भाषितं वचः ॥१५५॥

---

( १ ) विपश्यी दण्डिवत् । ( २ ) सप्तमशाक्यसिंहबुद्धविशेषस्य पृथक् नामानि । ( ३ ) दितिजाः २ दनुजाः २ । ( ४ ) असौकाली महापरा महाकालीत्यर्थः ।

सविशेषण[(1)]माख्यातं वाक्यं[1] [(2)]स्त्याद्यन्तकं पदम्[2] ।
[(3)]राद्धसिद्धकृतेभ्योऽन्त[3] आप्तोक्तिः[1] समया[2]गमौ[3] ॥१५६॥
आचाराङ्गं[1] सूत्रकृतं[2] स्थानाङ्गं[3] समवाययुक्[4] ।
पञ्चमं भगवत्यङ्गं[5] ज्ञाता[6] धर्मकथापि च ॥ १५७ ॥
[(4)]उपासका[7]न्तकृ[8]दनुत्तरोपपातिकाद्दशाः[9] ।
प्रश्नव्याकरणं[10] चैव विपाकश्रुत[11]मेव च ॥ १५८ ॥

---

( १ ) प्रयुज्यमानाख्याताप्रयुज्यमानाख्यातयोर्मध्ये एकं वाक्यं स्त्याद्यन्तं पदं सामान्यत आख्यातं कथ्यते । तदाख्यातं प्रयुज्यमानमप्रयुज्यमानं वा सविशेषणं प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते इति शेषः प्रयुज्यमानमाख्यातं यथा धर्मो वो रक्षतु, अप्रयुज्यमानाख्यातं यथाशीलं ते स्वं, अत्रास्तीति गम्यते, तिङ्सुबन्तचयो वाक्यमित्यमरः । ( २ ) स्च तिश्च स्ती तावादी येषां ते स्त्यादयः ते स्यादयः सुप्पर्यन्ताः त्यादयः स्यामहिपर्यन्ता गृह्यन्ते । तत् स्त्याद्यन्तकं पदमिति । ( ३ ) राद्धान्तः १ सिद्धान्तः २ कृतान्तः ३ । ( ४ ) उपासकात् अन्तकृतः अनुत्तरोपपातिकात् च दशा इति प्रत्येकं योज्यते तेन उपासकदशाः ७ अन्तकृद्दशाः ८ अनुत्तरोपपातिकदशाः ९ एते बहुवचनान्ताः ।

इत्येकादश सोपाङ्गान्यङ्गानि द्वादशं पुनः ।
दृष्टिवादो द्वादशाङ्गी स्याद्गणिपिटकाह्वया ॥ १५९ ॥
परिकर्म्म-सूत्र-पूर्वानुयोग-पूर्वगत-चूलिकाः पञ्च ।
स्युर्दृष्टिवादभेदाः पूर्वाणि चतुर्दशापि (२)पूर्वगते ॥१६०॥
उत्पादपूर्वमग्रायणीयमथ (३)वीर्य्यतः प्रवादं स्यात् ।
अस्तेर्ज्ञानात्सत्यात्तदात्मनः कर्म्मणश्च परम् ॥१६१॥
प्रत्याख्यानं विद्याप्रवादं-कल्याण-नामधेये च ।
प्राणावायं च क्रियाविशालमथ लोकबिन्दुसारमिति १६२
स्वाध्यायः श्रुतिराम्नायश्छन्दो वेदस्त्रयी पुनः ।
ऋग्यजुःसामवेदाः स्युरथर्वा तु तद्धृतिः ॥ १६३ ॥

---

(१) इत्येकादशप्रवचनपुरुषस्य अङ्गानीव अङ्गानि औपपादिकादिभि-र्द्वादशभिरुपाङ्गैः सह वर्त्तन्ते तानि सोपाङ्गानि । (२) वक्ष्यमाणानि चतुर्दश पूर्वगते पूर्वाणीत्युच्यन्ते । (३) वीर्य्यत वीर्य्यशब्दात् प्रवाद वीर्यप्रवादं २ अस्तीति नास्तेरप्युपलक्षणं ततः अस्तिनास्तिप्रवादं ४ ज्ञानप्रवादं ५ सत्यप्रवादं ६ आत्मप्रवादं ७ कर्मप्रवादं ८ प्रत्याख्यानप्रवादं ९ विद्याप्रवादं १० कल्याणप्रवादं ११ प्राणावायं १२ क्रियाविशालं १३ लोकबिन्दुसारं १४ ।

वेदान्तः स्यादुपनिषदोङ्कारप्रणवौ समौ ।
शिक्षा कल्पो व्याकरणं छन्दो ज्योतिर्निरुक्तयः ॥१६४॥
षडङ्गानि धर्मशास्त्रं स्यात् स्मृतिर्धर्म्मसंहिता ।
आन्वीक्षिकी तर्कविद्या मीमांसा तु विचारणा ॥१६५॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ॥ १६६ ॥
षडङ्गी वेदाश्चत्वारो मीमांसाऽन्वीक्षिकी तथा ।
धर्म्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश ॥ १६७ ॥
(१) सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थप्रपञ्चकम् ।
प्रस्तावस्तु (२) प्रकरणं निरुक्तं पदभञ्जनम् ॥ १६८ ॥
(३) अवान्तरप्रकरणविश्रामे शीघ्रपाठतः ।

---

(१) सूत्रं क्लीबे पुंस्यपि कश्चित् । (२) "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरस्थितं । आहुः प्रकरणं नाम शास्त्रभेदं विपश्चितः" ॥ १ ॥
(३) अवान्तरप्रकरणानां विश्रामो ग्रन्थावयव इत्यर्थः । तदाह्निकमित्युच्यते यदनेकार्थः "आह्निकं स्यात्पुनरहर्निवर्त्त्ये नित्यकर्मणि । भोजने ग्रन्थभागे चेति" ग्रन्थभागे ग्रन्थावयवे इति तट्टीका ।

आह्निकमधिकरणन्त्वे[1]कन्यायोपपादनम् ॥ १६९ ॥
[2]उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम् ।
टीका नि[3]रन्तरव्याख्या पञ्जिका [4]पदभञ्जिका ॥१७०॥
निबन्ध-वृत्ती [5]अन्वर्थे संग्रहस्तु समाहृतिः ।
परिशिष्टपद्धत्यादीन् [6]पथाऽनेन समुन्नयेत् ॥ १७१ ॥
कारिका तु स्वल्पवृत्तौ बहोरर्थस्य सूचनी ।

---

( १ ) एकन्यायं उपपादयतीति अधिकार इति यावत्, तस्य नामैकं अधिकरणमिति । ( २ ) उक्तानामनुक्तानां दुरुक्तानां चार्थानां चिन्तां ज्ञानं करोति इत्येवं शीलं एवंभूतग्रन्थस्य नाम वार्त्तिकम् ॥ ( ३ ) सुषमाणा विषमाणाञ्चार्थानां निरन्तरं अन्तराभवेनाविच्छेदेन व्याख्या "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" । इत्युक्तपञ्चलक्षणान्विता सा निरन्तरव्याख्या तस्यानामैकं टीका । ( ४ ) विषमाण्येव पदानि अर्थांश्च भनक्ति व्याख्यातीति पदभञ्जिका तस्या. पञ्जिका इत्येकं नाम । ( ५ ) अनुगतो मिलितोऽर्थो ययोस्तेऽन्वर्थे । ( ६ ) अनेन पथा अन्वर्थमार्गेणैव परिशिष्टश्च पद्धतिश्च परिशिष्टपद्धती ते आदी येषां तथा तान् समुन्नयेत् जानीयात् आदिग्रहणात् अध्यायः उच्छ्वास. अङ्कः सर्ग. इत्यादयो ग्रन्थावयवविशेषा ज्ञेयाः ।

कलिन्दिका सर्वविद्या निघण्टुर्नामसङ्ग्रहः ॥ १७२ ॥
इतिहासः पुरावृत्तं प्रवह्लिका प्रहेलिका ।
जनश्रुतिः किंवदन्ती वार्त्तैतिह्यं पुरातनी ॥ १७३ ॥
वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तोऽथाह्वयोऽभिधा ।
गोत्रसंज्ञानामधेयाख्याह्वाभिख्याश्च नाम च ॥ १७४ ॥
सम्बोधनमामान्त्रणमाह्वानं त्वभिमन्त्रणम् ।
आकारणं हवो हूतिः संहूतिर्बहुभिः कृता ॥ १७५ ॥
उदाहार उपोद्धात उपन्यासश्च वाङ्मुखम् ।
व्यवहारो विवादः स्यात् शपथः शपनं शपः ॥१७६॥
उत्तरं तु प्रतिवचः प्रश्नः पृच्छानुयोजनम् ।
कथङ्कथिकताथाथ देवप्रश्न उपश्रुतिः ॥ १७७ ॥
चटु चाटु प्रियप्रायं प्रियसत्यं तु सूनृतम् ।
सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ॥ १७८ ॥
यथास्थितं च सद्भूतेऽलीके तु वितथानृते ।

---

(१) सर्वविद्यः अकारान्तोऽपि पुंसि । (२) पूर्वचरितमित्यर्थः । (३) कथं कथक हेवक्त इति जल्पो यस्यां सा । (४) चटुः पुंसि क्लीबे च चाटुरपि एवं ।

अथ क्लिष्टं सङ्कुलं च परस्परपराहतम् ॥ १७९ ॥
सान्त्वं सुमधुरं ग्राम्यमश्लीलं श्लिष्टमस्फुटम् ।
लुप्तवर्णपदं ग्रस्तमवाच्यं स्यादनक्षरम् ॥ १८० ॥
अम्बूकृतं सथूत्कारं निरस्तं त्वरयोदितम् ।
आम्रेडितं द्विस्त्रिरुक्तम(१)बद्धं तु निरर्थकम् ॥ १८१ ॥
पृष्ठमांसादनं तद्यत् परोक्षे दोषकीर्त्तनम् ।
मिथ्याभियोगोऽभ्याख्यानं सङ्गतं हृदयङ्गमम् ॥१८२॥
परुषं निष्ठुरं रूक्षं विक्रुष्टमथ घोषणा ।
उच्चैर्घुष्टं वर्णनेडा स्तवः स्तोत्रं स्तुतिर्नुतिः ॥१८३॥
श्लाघा प्रशंसार्थवादः सा तु मिथ्याविकत्थनम् ।
जनप्रवादः कौलीनं विगानं वचनीयता ॥ १८४ ॥
स्यादवर्ण उपक्रोशो वादो नि(२)ष्पर्य्ययात् परः ।
गर्हणा धिक्क्रिया निन्दा कुत्सा क्षेपो जुगुप्सनम् १८५
आक्रोशाभीषङ्गाक्षेपाः शापः स क्षारणारते ।

---

(१) अबद्धं असंबद्धं यथा दशदाडिमादि वाक्यं समुदायार्थशून्यम् ।
(२) निर्वादः परिवादः अपवादः ।

विरुद्धशंसनं गालि[१]राशीर्मङ्गलशंसनम् ॥ १८६ ॥
श्लोकः कीर्त्तिर्यशोऽभिख्या समाज्ञा[२] रूशती[३] पुनः ।
अशुभा वाक् शुभा कल्पा चर्चरी चर्मटी समे ॥१८७॥
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।
आपृच्छालापः सम्भाषोऽनुलापः स्यान्मुहुर्वचः ॥१८८॥
अनर्थकं तु प्रलापो विलापः परिदेवनम् ।
उल्लापः[४] काकुवागन्योन्योक्तिः[५] सल्लापसंकथे ॥ १८९ ॥
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः ।
सुप्रलापः सुवचनं सन्देशवाक्तु वाचिकम् ॥ १९० ॥
आज्ञा शिष्टिर्निराङ्[६]निभ्यो देशो नियोगशासने ।
अववादोऽप्यथाहूय[७] प्रेषणं प्रतिशासनम् ॥ १९१ ॥

---

(१) गालिः स्त्रीलिङ्गम्, तथा आशीरपि आशीः आशिषौ आशिषः इति रूपम् । (२) समज्ञा इति वा पाठः (३) रूशती तृप्रत्ययान्तः वाच्यलिङ्गोऽयम् ॥(४) काक्वा वचनं काकुवाक् शोकभयादिभिः शोषितकण्ठे ध्वनिः काकुः यदमर आह "काकु स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इति शोकभयादिभिः शोषितकण्ठवाक्यस्यैकमुल्लाप इति । (५) अन्योन्येन उक्तिभाषणम् । (६) निराङ्निभ्यो देशः यथा निर्देशः २ आदेशः ४ निदेशः ५ । (७) आहूय आकार्य्य यत्प्रेषणं मोचनं ।

संवित्सन्धाऽऽस्थाभ्युपायः संप्रत्याङ्भ्यः परः श्रवः ।
अङ्गीकारोऽभ्युपगमः प्रतिज्ञागूश्च सङ्गरः ॥ १९२ ॥
गीतनृत्यवाद्यत्रयं नाट्यं तौर्य्यत्रिकं च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका ॥१९३॥
गीतं गानं गेयं गीतिर्गान्धर्वमथ नर्त्तनम् ।
नटनं नृत्यं नृत्तं च लास्यं नाट्यं च ताण्डवम् ॥१९४॥
मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकं हि तत् ।
पानगोष्ठ्यामुच्चतालं रणे वीरजयन्तिका ॥१९५॥
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनयः समौ ॥ १९६ ॥
स चतुर्विध आहार्य्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिकः सत्त्वेन सात्त्विकः ॥१९७॥
स्यान्नाटकं प्रकरणं भाणः प्रहसनं डिमः ।

---

(१) यथा संश्रवः ५ प्रतिश्रवः ६ आश्रवः ७ । (२) भरतादिशास्त्रनिर्दिष्टं गीतनृत्यवाद्यत्रयं तन्नाम तौर्यत्रिकमिति । (३) अस्मिन्निति भरतादिशास्त्रे सम्याना प्रेक्षणार्थं प्रारब्धस्य तौर्य्यत्रिकस्यापरं नाम नाट्यधर्मिका । (४) वाचस्पतिस्तु हल्लिसकोऽस्त्रियामाह ।

(१)व्यायोग[६]समवकारौ[७] वीथ्यङ्के[८]हामृगा[९] इति ॥ १९८ ॥
अभिनेयप्रकाराः स्युर्भाषाः[१] षट्[(२)] संस्कृतादिकाः ।
भारती[१] सात्वती[२] कौशिक्यारभट्यौ[३,४] च वृत्तयः ॥१९९॥
वाद्यं[१] वादित्र[२]मातोद्यं[३] तूर्यं[(३)४] तूरं[५] स्मरध्वजः[६] ।
ततं[१] वीणाप्रभृतिकं तालप्रभृतिकं घनं[१] ॥ २०० ॥
वंशादिकं तु शुषिर[१]मानद्धं[१] मुरजादिकम् ।
वीणा[१] पुनर्घोषवती[२] विपञ्ची[३] कण्ठकूणिका[४] ॥ २०१ ॥
वल्लकी[५] साथ तन्त्रीभिः सप्तभिः परिवादिनी[१] ।
शिवस्य वीणा नालम्बी[१] सरस्वत्यास्तु कच्छपी[१] ॥२०२॥
नारदस्य तु महती[१] गणानां तु प्रभावती[१] ।
विश्वावसोस्तु बृहती[१] तुम्बुरोस्तु कलावती[१] ॥२०३॥
चण्डालानां तु कटोल[(४)]वीणा[१] चाण्डालिका[२] च सा ।
कायः कोलम्बकस्तस्या उपनाहो[१] निबन्धनम् ॥२०४॥
दण्डः पुनः प्रवालः[१] स्यात्ककुम्भस्तु[१] प्रसेवकः[२] ।

---

(१) आभाणः समवाकारो इति वा पाठः । (२) संस्कृतं १ प्राकृतं २ मागधी ३ शौरसेनी ४ पैशाची ५ अपभ्रंशः ६ एताः षट् भाषा उच्यन्ते (३) तूर्यमिति पुंक्ली० । (४) कण्डोल इति वा पाठः ।

मूले वंशशलाका स्यात्कलिका कूणिकापि च ॥२०५॥
कालस्य क्रियया मानं तालः साम्यं पुनर्लयः ।
[(१)]द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥ २०६ ॥
मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा ।
स्याद्यशःपटहो ढक्का [(३)]भेरी दुन्दुभिरानकः ॥ २०७ ॥
[(४)]पटहोऽथ शारिका स्यात्[(५)]कोणो वीणादिवादनम् ।
[(६)]शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ॥ २०८ ॥
बीभत्साद्भुतशान्ताश्च रसा भावाः पुनस्त्रिधा ।
स्थायिसात्त्विकसञ्चारिप्रभेदैः स्याद्रतिः पुनः ॥२०९॥
रागोऽनुरागोऽनुरतिर्हासस्तु हसनं हसः ।
घर्घरो हासिको हास्यं तत्रादृष्टरदे स्मितम् ॥२१०॥
वक्रोष्ठिकाऽथ हसितं [(८)]किञ्चिद्दृष्टरदाङ्कुरे ।

(१) द्रुतादिलयानामैकैकम् । (२) अङ्की आलिङ्गी एतौ इन्प्रत्ययान्तौ । (३) भेरी स्त्रीलिङ्गे दुन्दुभि पुंसि । (४) पटहः पुंसि क्लीबे च । (५) कोणः पुंसि, द्वयोस्तु कोण इति वाचस्पतिः । (६) शृङ्गारः पुंसि क्लीबे च । हास्यादयः पुंल्लिङ्गाः । (७) न दृष्टा रदा यस्मिन् तस्मिन् एवंविधे हास्ये स्मितम् । (८) किञ्चित् दृष्टा रदा दन्ता एव अङ्कुरा यस्मिन् स तस्मिन् एवंविधे हासे इत्यर्थः ।

किञ्चिच्छुते विहसितमट्टहासो महीयसि ॥ २११ ॥
अतिहासस्त्व(१)नुस्यूतेऽपहासोऽकारणात्कृते ।
सोत्प्रासे त्वाच्छुरितकं हसनं (२)स्फुरदोष्ठके ॥ २१२ ॥
शोकः (३)शुक् शोचनं खेदः क्रोधो मन्युः क्रुधा रुषा ।
क्रुत् कोपः प्रतिघो रोषो (४)रुट् चोत्साहः प्रगल्भता ॥ २१३ ॥
अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।
अध्यवसाय ऊर्ज्जोऽथ वीर्य्यं सोतिशयान्वितः ॥ २१४ ॥
भयं भीर्भीतिरातङ्क आशङ्का साध्वसं (५)दरः ।
भि(६)या च तच्चाहिभयं भूपतीनां स्वपक्षजम् ॥ २१५ ॥
अदृष्टं वह्नितोयादेर्दृष्टं स्वपरचक्रजम् ।
भयङ्करं प्रतिभयं भीमं भीष्मं भयानकम् ॥ २१६ ॥
भीषणं भैरवं घोरं दारुणं च भयावहम् ।
जुगुप्सा तु घृणार्थे स्याद्विस्मयश्चित्रमद्भुतम् ॥ २१७ ॥
(७)चोद्याश्चर्ये शमः शान्तिः शमथोपशमावपि ।

---

(१) अनुस्यूते निरन्तरे । (२) स्फुरन् चलन् ओष्ठो यस्मिन् स तस्मिन् स्फुरदोष्ठके हासे । (३) शुक् स्त्रियाम् । (४) रुट् स्त्रियाम् । (५) दरः पुंसि क्लीबे च । (६) भिया आवन्तः । (७) चोद्या इति वा पाठः ।

तृष्णाक्षयः स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८॥
स्तम्भो जाड्यं स्वेदो घर्म्मनिदाघौ (१)पुलकः पुनः ।
रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥२१९॥
रोमोद्गमं (२)उद्धुषणमुल्लाकसनमित्यपि ।
स्वरभेदस्तु कल्लत्वं (३)स्वरे कम्पस्तु वेपथुः ॥ २२० ॥
वैवर्ण्यं कालिकाथाश्रु बाष्पो नेत्राम्बु रोदनम् ।
अस्रमस्रं प्रलयस्त्वचेष्टतेत्यष्ट सात्विकाः ॥ २२१ ॥
धृतिः सन्तोषः स्वास्थ्यं स्यादाध्यानं स्मरणं स्मृतिः ।
मतिर्मनीषा बुद्धिर्धीर्धिषणाज्ञप्तिचेतनाः ॥ २२२ ॥
प्रतिभा प्रतिपत्प्रज्ञाप्रेक्षा(४)चिदुपलब्धयः ।
संवित्तिः शेमुषी दृष्टिः (५)सा मेधा धारणक्षमा ॥२२३॥
पण्डा तत्त्वानुगा मोक्षे ज्ञानं विज्ञानम(६)न्यतः ।

---

(१) पुलक. पुंसि क्लीबे च तथा कण्टकोऽपि । (२) उद्धर्षण इति वा उल्लसनक इति वा पाठः ।(३)स्वरकम्प इत्येवं वा नाम वेपथुः पुंसि। (४) चित् स्त्रिया । (५) सा मतिर्धारणक्षमा धारणसमर्था चेत्तदा मेधा इत्युच्यते। (६) अन्यत' इति मोक्षशास्त्रादन्यत्र शिल्पे चित्रादौ च या मतिर्निपुणायते तत्रैकं नाम विज्ञानम् ।

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ॥ २२४ ॥
ऊहाऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ।
व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा सापत्रपाऽन्यतः ॥२२५॥
जाड्यं मौर्ख्यं विषादोऽवसादः सादो विषण्णता ।
मदो मुन्मोदसम्भेदो(१) व्याधिस्त्वाधी रुजाकरः ॥२२६॥
निद्रा प्रमीला शयनं संवेश-स्वाप-संलयाः ।
नन्दीमुखी(२) श्वासहेतिस्तन्द्री सुप्तं तु साधिका २२७
औत्सुक्यं रणरणकोत्कण्ठे आयल्लकोरती ।
हल्लेखोत्कलिके चाथावहित्था(३)कार(४)गोपनम् ॥२२८॥
शङ्कानिष्टोत्प्रेक्षणं स्याच्चापलं त्वनवस्थितिः ।
आलस्यं तन्द्रा कौसीद्यं हर्षश्चित्तप्रसन्नता ॥२२९॥
ह्लादः प्रमोदः प्रमदो मुत्प्रीत्यामोदसम्मदाः ।
आनन्दानन्दथू गर्वस्त्वहङ्कारोऽवलिप्तता ॥ २३० ॥

---

(१) सम्भेदौ इति वा पाठः आधिर्मनःपीडा उच्यते । (२) नन्दीमुखी नदीवत् स्वाङ्गादीप् क्वचिदानन्तो गङ्गावत् । (३) अवहित्थं कुलवत् वस्तुतस्तु स्त्रियां क्लीबे च । (४) आकारस्य भ्रूविकारमुखरागादेर्गोपनं आच्छादनम् ।

दर्प्पोऽभिमानो[1] ममता मानश्चित्तोन्नतिः स्मयः ।
स मिथोऽहमहमिका या तु सम्भावनात्मनि ॥२३१॥
दर्प्पाऽत्साहोपुरुषिका[2] स्यादहम्पूर्विका[3] पुनः ।
अहं पूर्वमहं पूर्वमित्युग्रत्वं तु चण्डता ॥ २३२ ॥
प्रबोधस्तु विनिद्रत्वं ग्लानिस्तु बलहीनता ।
दैन्यं कार्प्पण्यं श्रमस्तु क्लमः क्लेशः परिश्रमः ॥२३३॥
प्रयासायासव्यायामा उन्मादश्चित्तविप्लवः ।
मोहो[4] मौढ्यं चिन्ताध्यानममर्षः क्रोधसम्भवः ॥२३४॥
शुणो जिगीषोत्साहवांस्त्रासस्त्वाकस्मिकं भयम् ।

---

(१)अभिमानः पुंसि क्लीबे। वैजयन्तीकारस्तु "अभिमानस्त्वहङ्कारो गर्वोऽस्त्री"त्याह । (२) अहो अहं पुरुषः इतिदर्पात् या आत्मनि स्वविषये सम्भावना सा आहोपुरुषिका "यत्र वृथाभिनिवेशस्तामाहोपुरुषिकां विदुः" यथा "पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका" इति सुंदरलहर्य्यां । (३) अहं पूर्वं इति यस्यां क्रियाया सर्वे ब्रुवते साहंपूर्विका । (४) मोहो मूर्च्छा अविद्या च । यदाह महेश्वर "मोहमिच्छन्ति मूर्च्छायामविद्याया च सूरय" इति मूर्च्छायां यथा "अथ मोहपरायणा सती विवशा कामवधूविबोधिता" इति कुमारसम्भवे । अविद्या विपर्य्ययस्तत्र यथा " न मुञ्चामः कामानहह गहनो मोहमहिमा" ।

अपस्मारः स्यादावेशो निर्वेदः स्वावमाननम् ॥२३५॥
आवेगस्तु त्वरिस्तूर्णिः[(१)] संवेगः सम्भ्रमस्त्वरा ।
वितर्कः स्यादुन्नयनं परामर्शो विमर्शनम् ॥२३६॥
अध्याहारस्तर्क ऊहोऽसूयान्यगुणदूषणम् ।
मृतिः संस्था[(२)] मृत्युकालौ परलोकगमोऽत्ययः ॥२३७॥
पञ्चत्वं निधनं नाशो दीर्घनिद्रा निमीलनम् ।
दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा ॥२३८॥
मरको[(३)] मारिस्त्रियस्त्रिंशदमी ( स्यु )र्व्यभिचारिणः ।
स्युः कारणानि कार्य्याणि सहचारीणि यानि च ॥२३९॥
रत्यादेः स्थायिनो लोके तानि चेत्काव्यनाट्ययोः ।
विभावा अनुभावाश्च व्यभिचारिण एव च ॥ २४० ॥
व्यक्तः स तैर्विभावाद्यैः स्थायिभावो भवेद्रसः ।
पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥२४१॥
शैलूषो भरतः सर्वकेशी[(४)] भरतपुत्रकः ।

---

(१) त्वरिः तूर्णिः स्त्रियां । (२) संस्था पुंसि स्त्रियां च । संपूर्वस्थाधातोर्मरणार्थत्वं । निधनं पुंसि क्लीबे च (३) मरकः पुसि क्लीबे च । मारि स्त्रिया । (४) सर्ववेशी इत्यपि पाठः ।

दर्प्पोऽभिमानो[1] ममता मानश्चित्तोन्नतिः स्मयः ।
स मिथोऽहमहमिका या तु सम्भावनात्मनि ॥२३१॥
दर्प्पाऽत्साहोपुरुषिका[2] स्यादहम्पूर्विका[3] पुनः ।
अहं पूर्वमहं पूर्वमित्युग्रत्वं तु चण्डता ॥ २३२ ॥
प्रबोधस्तु विनिद्रत्वं ग्लानिस्तु बलहीनता ।
दैन्यं कार्प्पण्यं श्रमस्तु क्लमः क्लेशः परिश्रमः ॥२३३॥
प्रयासायासव्यायामा उन्मादश्चित्तविप्लवः ।
मोहो[4] मौढ्यं चिन्ताध्यानममर्षः क्रोधसम्भवः ॥२३४॥
शुणो जिगीषोत्साहवांस्त्रासस्त्वाकस्मिकं भयम् ।

---

(१)अभिमानः पुंसि क्लीबे। वैजयन्तीकारस्तु "अभिमानस्त्वहङ्कारो गर्वोऽस्त्री"त्याह । (२) अहो अहं पुरुषः इतिदर्पात् या आत्मनि स्वविषये सम्भावना सा आहोपुरुषिका "यत्र वृथाभिनिवेशस्तामाहोपुरुषिकां विदुः" यथा "पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका" इति सुंदरलहर्य्यां । (३) अहं पूर्वं इति यस्या क्रियायां सर्वे ब्रुवते साहंपूर्विका । (४) मोहो मूर्च्छा अविद्या च । यदाह महेश्वरः "मोहमिच्छन्ति मूर्च्छायामविद्यायां च सूरय" इति मूर्च्छायां यथा "अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता" इति कुमारसम्भवे । अविद्या विपर्य्ययस्तत्र यथा "न मुञ्चामः कामानहह गहनो मोहमहिमा" ।

अपस्मारः स्यादावेशो निर्वेदः स्वावमाननम् ॥२३५॥
आवेगस्तु (१)त्वरिस्तूर्णिः संवेगः सम्भ्रमस्त्वरा ।
वितर्कः स्यादुन्नयनं परामर्शो विमर्शनम् ॥२३६॥
अध्याहारस्तर्क ऊहोऽसूयान्यगुणदूषणम् ।
मृतिः (२)संस्था मृत्युकालौ परलोकगमोऽत्ययः ॥२३७॥
पञ्चत्वं निधनं नाशो दीर्घनिद्रा निमीलनम् ।
दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा ॥२३८॥
(३)मरको मारिस्त्रयस्त्रिंशदमी ( स्यु )र्व्यभिचारिणः ।
स्युः कारणानि कार्य्याणि सहचारीणि यानि च॥२३९॥
रत्यादेः स्थायिनो लोके तानि चेत्काव्यनाट्ययोः ।
विभावा अनुभावाश्च व्यभिचारिण एव च ॥ २४० ॥
व्यक्तः स तैर्विभावाद्यैः स्थायिभावो भवेद्रसः ।
पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥२४१॥
शैलूषो भरतः (४)सर्वकेशी भरतपुत्रकः ।

---

(१) त्वरिः तूर्णिः स्त्रियां । (२) संस्था पुंसि स्त्रियां च । संपूर्वस्थाधातोर्मरणार्थत्वं । निधनं पुंसि क्लीबे च (३) मरक पुंसि क्लीबे च । मारिः स्त्रियां । (४) सर्ववेशी इत्यपि पाठः ।

(१)धर्म्मीपुत्रो[५] (२)रङ्गजाया-जीवो[७] रङ्गावतारकः ॥ २४२ ॥
(३)नटः कृशाश्वी[१०] शैलाली[११] चारणस्तु कुशीलवः[२] ।
(४)भ्र-भ्रु-भ्रू-भृ-परः कुंसो[४] नटः[१] स्त्रीवेषधारकः ॥२४३॥
वेश्याचार्य्यः[१] पीठमर्द्दः[२] सूत्रधारस्तु[१] सूचकः ।
नन्दी[१] तु पाठको नान्द्याः पार्श्वस्थः[१] पारिपार्श्विकः[२] २४४
वासन्तिकः केलिकिलो[२] वैहासिको[३] विदूषकः[४] ।
प्रहासी[५] प्रीतिदः[६]श्चाथ षिङ्गः[१] पल्लविको[२] विटः[३] ॥२४५॥
पिता त्वाबुकः[१] आवुत्त-भावुकौ[२] भगिनीपतौ ।
भावो[१] विद्वान् युवराजः कुमारो[१] भर्त्तृदारकः[२] ॥२४६॥
बाला वासूः[१]मार्षः[१] आर्य्यो[२] देवो[१] भट्टारको[२] नृपः ।
राष्ट्रियो[१] नृपतेः श्यालो दुहिता भर्तृदारिका[१] ॥२४७॥
देवी[१] कृताभिषेकान्या अहिनी[१] गणिकाज्जुका[१] ।
नीचा चेटी[१] सखीहूतौ हण्डे[१] हञ्जे[२] हलाः[३] क्रमात् २४८
अब्रह्मण्यमवध्योक्तौ ज्यायसी तु स्वसाऽत्तिका[१] ।

---

(१) धात्रीपुत्र इति वा ।(२) रङ्गाजीवः ६ जायाजीवः ७ ।(३) नटः पुंसि क्लीबे च । कृशाश्वीति इन्नन्तः शैलाली णिन्नन्तः ।(४) भ्रकुंसः १ भ्रुकुंसः २ भ्रूकुंसः ३ भृकुंसः ४ इति ।

भर्त्ताऽर्य्यपुत्रो[1] माताम्बा[1] भदन्ताः[1] सौगतादयः॥२४९॥
पूज्ये[1] तत्रभवान[2]त्रभवांश्च[3] भगवान[4]पि ।
(१)पादा[1] भट्टारको[2] देवः[3] प्रयोज्यः पूज्यनामतः ॥ २५० ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधान-
चिन्तामणौ नाममालायां देवकाण्डो द्वितीयः ॥२॥

---

(१) पूज्यनामतः अग्रे प्रयोज्यः यथा देवपादाः आर्यपादाः पूज्यपादा इत्यादि ।

# अभिधानचिन्तामणौ ।

## मर्त्यकाण्डः ।

### तृतीयः ।

मर्त्यः[1] पञ्चजनो[2] भूस्पृक्[3] पुरुषः[4] पूरुषो[5] नरः[6] ।
मनुष्यो[7] मानुषो[8] ना[9] विट्[10] मनुजो[11] मानवः[12] पुमान्[13] ॥१॥
बालः[1] पाकः[2] शिशु[3]र्डिम्भः[4] पोतः[5] शावः[6] स्तनन्धयः[7] ।
पृथुका[8]र्भो[9]त्तानशयाः[10] क्षीरकण्ठः[11] कुमारकः[12] ॥ २ ॥
शिशुत्वं[1] शैशवं[2] बाल्यं[3] वयस्थ[1]स्तरुणो[2] युवा[3] ।
तारुण्यं[1] यौवनं(१)[2] वृद्धः[1] प्रवयाः[2] स्थविरो[3] जरन्[4] ॥ ३ ॥
(२)जरी[5] जीर्णो[6] यातयामो[7] जीनो[8]ऽथ विस्रसा[1] जरा[2] ।
वार्द्धकं[1] स्थाविरं[2] ज्यायान्[1] वर्षीयान्[2] दशमी(३)[3]त्यपि ॥ ४ ॥

---

(१) यौवनशब्दः पुंसि क्लीबे च । (२) जरी जरिणौ जरिणः इति रूपाणि । (३) दशमी इन्नन्तः ।

विद्वान् सुधीः कविर्विचक्षणलब्धवर्णाः
ज्ञः प्राप्तरूपकृतिकृष्ट्यभिरूपधीराः ।
मेधाविकोविदविशारदसूरिदोष-
ज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ ५ ॥

व्यक्तो विपश्चित्सङ्ख्यावान् सन् प्रवीणे तु शिक्षितः ।
निष्णातो निपुणो दक्षः (१) कर्म्म-हस्त-मुखाः कृतात् ॥६॥
कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाः पटुः ।
छेको विदग्धे प्रौढस्तु प्रगल्भः प्रति(२)भान्वितः ॥७॥
कुशाग्रीयमतिः सूक्ष्मदर्शी तत्कालधीः पुनः ।
प्रत्युत्पन्नमतिर्दूराद्यः पश्येद्दीर्घदर्श्यसौ ॥ ८ ॥
हृदयालुः सहृदयश्चिद्रूपोऽप्यथ संस्कृते ।
व्युत्पन्नप्रहतक्षुण्णा (३)अन्तर्वाणिस्तु शास्त्रवित् ॥ ९ ॥
वागीशो वाक्पतौ वाग्मी वाचोयुक्तिपटुः प्रवाक् ।
समुखो वावदूकोऽथ वदो वक्ता वदावदः ॥१०॥

---

(१) कृतकर्म्मा ५ कृतहस्तः ६ कृतमुखः ७ कृतकर्म्मा कृतकर्म्माणौ कृतकर्म्माणः । (२) प्रतिभामुख इति वा पाठः । (३) शास्त्रं वेत्ति न च तथा वक्तुं शक्नोति यः सोऽन्तर्वाणिः ।

स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
यद्वदोऽनुत्तरो(१) दुर्वाक् कद्वदे स्यादथाधरः ॥ ११ ॥
हीनवादि(२)न्येडमूकानेडमूकौ त्ववाक्श्रुतौ ।
रवणः शब्दनस्तुल्यौ कुवादकुचरौ समौ ॥ १२ ॥
लोहलोऽस्फुटवाग् मूकोऽवागसौम्यस्वरोऽस्वरः ।
वेदिता विदुरो विन्दुर्वन्दारुस्त्वभिवादकः ॥ १३ ॥
आशंसुराशंसितरि कद्वर(३)स्त्वतिकुत्सितः ।
निराकरिष्णुः क्षिप्नुः(४) स्याद्विकासी तु विकस्वरः ॥१४॥
दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदः ।
दानशीलः स वदान्यो वदन्योऽप्यथ बालिशः ॥ १५ ॥
मूढो मन्दो यथाजातो बालो मातृमुखो जडः ।
मूर्खोऽमेधो विवर्णाज्ञौ वैधेयो मातृशासितः ॥ १६ ॥
देवानांप्रियजाल्मौ च दीर्घसूत्र(५)श्चिरक्रियः ।

---

(१) अनुत्तरे इति वा तन्मते पश्चादुत्तरदातुर्नाम । (२) हीनं स्वपराजयं वक्तीति हीनवादी तस्मिन् इति विग्रहः । (३) कद्वरः कद्वदः इति वा पाठः । (४) क्षिप्त इति वा पाठः । (५) दीर्घसूत्रः अकारान्तो देववत् दीर्घसूत्री इत्यपि व्यञ्जनान्तो णिन् प्रत्ययान्तत्वात् यदाह हलायुध' दीर्घसूत्री जडक्रिय इति "दीर्घं सूत्रयतीत्येवंशीलो दीर्घसूत्री" इति तट्टीका ।

मन्दः क्रियासु कुण्ठः स्यात् क्रियावान् कर्म्मसूद्यतः १७
कर्म्मक्षमोऽलङ्कर्म्माणः कर्म्मशूरस्तु कर्म्मठः ।
कर्म्मशीलः कार्म्म आयः शूलिकस्तीक्ष्णकर्म्मकृत् ॥ १८
सिंहसंहननः स्वङ्गः स्वतन्त्रो निरवग्रहः ।
यथाकामी स्वरुचिश्च स्वछन्दः स्वैर्य्यपावृतः ॥ १९ ॥
यदृच्छा स्वैरिता स्वेच्छा नाथवान् निघ्नगृह्यकौ ।
(१)तन्त्रायत्तवशाधीनच्छन्दवन्तः परात्परे ॥ २० ॥
लक्ष्मीवान् लक्ष्मणः श्लील इभ्य आढ्यो धनीश्वरः ।
ऋद्धो विभूतिः संपत्तिर्लक्ष्मीः श्रीरृद्धिसम्पदः ॥ २१ ॥
दरिद्रो दुर्विधो दुःस्थो दुर्गतो निःस्वकीकटौ ।
अकिञ्चनोऽधिपस्त्वीशो नेता परिवृढो(२)ऽधिभूः ॥ २२ ॥
पतीन्द्रस्वामिनाथोर्य्याः प्रभुर्भर्त्तेश्वरो विभुः ।
ईशितेनो नायकश्च नियोज्यः परिचारकः ॥ २३ ॥
डिङ्गरः किङ्करो भृत्यश्चेटो गोप्यः पराचितः ।

---

(१) परतन्त्रः ४ परायत्तः ५ परवशः ६ पराधीनः ७ परच्छन्दः ८ परवान् ९ । (२) अधिप इति वा पाठः ।

दासः प्रैष्यः(१) परिस्कन्दो भुजिष्यपरिकर्म्मिनौ २४
परान्नः परपिण्डादः परजातः परैधितः ।
भृतके भृतिभुग् वैतनिकः कर्म्मकरोऽपि च ॥ २५ ॥
स निर्भृतिः कर्म्मकारो भृतिः स्यान्निष्क्रयः पणः ।
कर्म्मण्या वेतनं मूल्यं निर्वेशो मरणं विधा ॥२६॥
भर्म्मण्या भर्म भृत्या च भोगस्तु गणिकाभृतिः ।
खलपूः स्याद्बहुकरो भारवाहस्तु भारिकः ॥ २७ ॥
वार्त्तावहे वैवधिको भारे विवधवीवधौ ।
काचः शिक्यं तदालम्बो भारयष्टिर्विहङ्गिका ॥२८॥
शूरश्चारभटो वीरो विक्रान्तश्चाथ कातरः ।
दरितश्चकितो भीतो भीरु-भीरुक-भीलुकाः ॥२९॥
विहस्तव्याकुलौ व्यग्रे कान्दिशीको भयद्रुते ।
उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥

---

(१) इ गतिहिंसादर्शनेषु आत्मनेपदि भ्वादिश्च अस्मात् ण्यणि गुरूपधत्वात् गुणाभावे इष्य इति रूप तस्मिन् परे सति गुण एव भवति पररूपानुपातिन्या वृद्धेरप्रसङ्गात् प्रेष्य इति । (२) निर्भृत्या मूल्येन सहितः सनिर्भृतिः ।

महेच्छे तूद्भटोदारो दात्तोदीर्णमहाशयाः ।
महामना महात्मा च कृपणस्तु मितम्पचः ॥ ३१ ॥
कीनाशः(१)स्तद्धनः क्षुद्रकदर्यदृढमुष्टयः ।
किम्पचानो दयालुस्तु कृपालुः करुणापरः ॥ ३२ ॥
सूरतोऽथ दया शूकः कारुण्यं करुणा घृणा ।
कृपानुकम्पानुक्रोशो हिंस्रे शरारुघातुकौ ॥ ३३ ॥
व्यापादनं विशरणं प्रमयः प्रमापणम्
निर्ग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं
प्रोज्जासनं प्रशमनं प्रतिघातनं वधः ॥ ३४ ॥

प्रवासनोद्वासनघातनिर्वा-
सनानि संज्ञप्तिनिशुम्भहिंसाः ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥

---

(१) तद्घ्न इति वा पाठः ।

अपासनं वर्ज्जनमारपिञ्जा
(१)निष्कारणक्राथविशारणानि ।
स्युः कर्त्तने कल्पन-वर्द्धने च
छेदश्च घातोद्यत आततायी ॥ ३६ ॥

स (२)शैर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति ।
प्रमीत उपसम्पन्नः परेतप्रेतसंस्थिताः(३) ॥ ३७ ॥
नाम(४)लेख्य-यशः-शेषो व्यापन्नोप(५)गतौ मृतः ।
परासुस्त(६)दहे दानं तदर्थमौर्ध्वदेहिकम् ॥ ३८ ॥
मृतस्नानमपस्नानं निवापः पितृतर्पणम् ।
चितिचित्याचितास्तुल्या ऋजुस्तु प्राञ्जलोऽञ्जसः ॥३९॥
दक्षिणे सरलोदारौ शठस्तु निकृतोऽनृजुः ।
क्रूरे नृशंसनिस्त्रिंशपापा धूर्त्तस्तु वञ्चकः ॥ ४० ॥

---

(१) विकारण इति वा पाठः । (२) शीर्षच्छेदक. इति वा पाठः । (३) संपूर्वकस्थाधातोर्मरणार्थतामादायैतन्निष्पन्नम् । (४) नामशेषः । आलेख्यशेषः ७ यशःशेषः ८ । (५) उपगतो इति वा पाठः । (६) तस्य मृतस्य अहस्तदहस्तस्मिन् तदहे ।

व्यंसकः कुहको दाण्डाजिनिको मायिजालिकौ ।
(१)मायां तु शठता शाठ्यं कुसृतिर्(२)निकृतिश्च सा ॥ ४१ ॥
(३)कपटं कैतवं दम्भः कूटं छद्मोपधिश्छलम् ।
व्यपदेशो मिषं लक्षं निभं व्याजोऽथ कुक्कुटिः ॥ ४२ ॥
कुहना दम्भचर्य्या च वञ्चनं तु प्रतारणम् ।
व्यलीकमतिसन्धानं साधौ सभ्यार्य्यसज्जनाः ॥ ४३ ॥
दोषैकदृक् पुरो(५)भागी कर्णेजपस्तु दुर्जनः ।
पिशुनः सूचको नीचो द्विजिह्वो मत्सरी खलः ॥ ४४ ॥
व्यसनार्त्तस्तूपरक्तश्चोरस्तु प्रतिरोधकः ।
दस्युः (६)पाटच्चरस्तेनस्तस्करः पारिपन्थिकः ॥ ४५ ॥
परिमोषिपरा(७)स्कन्द्यैकागारिकमलिम्लुचाः ।

---

(१) मायादयः कपटादयश्च एकार्था इत्येके "कपटादयः सप्त व्यपदेशादयश्च पञ्च भिन्नार्थाः" इत्यमरः। तदा कपटादयः सप्त कपटवाचकाः तथापि च वेषभाषाविपर्य्ययकरणं कपटं कार्षापणं तुलादेः परवञ्चनार्थं न्यूनाधिककरणं कूटमिति विशेषो नाश्रितः। (२) निष्कृतिरिति केचित्। (३) कपटं पुंसि क्लीबे च कूटं पुंसि क्लीबे च छद्मन् पुंसि क्लीबे च। (४) अभिसन्धानं इति वा। (५)पुरोभागी इन्नन्तः। (६)पटच्चर इत्यपि। (७) परास्कन्दी इन्नन्तः।

यः पश्यतो हरेदर्थं स चोरः पश्यतोहरः ॥ ४६ ॥
चौर्य्यं तु चौरिका (१)स्तेयं (२)लोप्त्रं त्वपहृतं धनम् ।
यद्भविष्यो दैवपरोऽथालस्यः शीतकोऽलसः ॥ ४७ ॥
मन्दस्तुन्दपरिमृजोऽनुष्णो दक्षस्तु पेशलः ।
पटूष्णोष्णकसूत्थानचतुराश्चाथ तत्परः ॥ ४८ ॥
आसक्तः प्रवणः प्रह्वः प्रसितश्च परायणः ।
दातोदारः स्थूललक्षदानशौण्डौ बहुप्रदे ॥ ४९ ॥
दानमुत्सर्ज्जनं त्यागः प्रदेशनविसर्ज्जने ।
(३)विहायितं वितरणं स्पर्शनं प्रतिपादनम् ॥ ५० ॥
विश्राणनं निर्व्वपणमपवर्ज्जनमंहतिः ।
अर्थव्ययज्ञः सुकलो याचकस्तु (४)वनीपकः ॥ ५१ ॥
मार्गणोऽर्थी याचनकस्(५)तर्कुकोऽथार्थनैषणा ।
अर्दना (६)प्रणयो याञ्चा याचनाध्येषणा सनिः ॥ ५२ ॥

---

(१) स्तेनस्य भाव. स्तेयं स्तेनान्नलुक् चेति यः राजादित्वाद्यणि स्तैन्यमपि। (२) लोध्रमित्यपि हलायुधटीका । (३) विहापितं इति वा पाठः । (४) वनीयक इति कश्चित् । (५) तर्कक इति वा पाठः । (६) प्रणयः पुंसि याञ्चादयः स्त्रियां सनिशब्दः पुंस्यपि ।

उत्पतिष्णुस्तूत्पतितोलङ्करिष्णुस्तु मण्डनः ।
भविष्णुर्भविता भूष्णुः समौ वर्त्तिष्णुवर्त्तनौ ॥ ५३ ॥
विसृत्वरो विसृमरः प्रसारी च विशारिणि ।
लज्जाशीलोऽपत्रपिष्णुः सहिष्णुः क्षमिता क्षमी ॥५४॥
तितिक्षुः सहनः क्षन्ता तितिक्षा सहनं क्षमा ।
ईर्ष्यालुः कुहनो क्षान्तिरीर्ष्या क्रोधी तु रोषणः ॥५५॥
अमर्षणः क्रोधनश्च चण्डस्त्वत्यन्तकोपनः ।
बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ॥ ५६ ॥
बुभुक्षायामशनाया जिघत्सा रोचको[१] रुचिः ।
पिपासुस्तृषितस्तृष्णक्[२] तृष्णा तर्षोऽपेलासिका ॥ ५७ ॥
पिपासा तृट् तृषोदन्या धीतिः पानेऽर्थे शोषणम् ।
रसादानं भक्षकस्तु घस्मरोऽद्मर आशितः[३] ॥ ५८ ॥
भक्तमन्नं कूरम[४]न्धो मिस्सा दीदिविरोदनः ।
अशनं[५] जीवनकं च याजो वाजः प्रसादनम् ॥५९॥

---

(१) रोचनं रोचतेऽस्मिन्निति वा रोचकः । (२) तृष्णक् तृष्णजौ तृष्णजः । (३) आशिता इति वा पाठः । (४) कूरमिति पुंसि क्लीवे च । अन्धः अन्धसी अन्धांसि । (५) अशनं पुंसि क्लीवे च ।

भिस्सटा दग्धिका सर्व्वरसाग्रं मण्डमत्र तु ।
दधिजे मस्तु भक्तोत्थे निस्रावाचाममासराः ॥ ६० ॥
श्राणा विलेपी तरला यवागूरुष्णिकापि च ।
सूपः स्यात्प्रहितं सूदो व्यञ्जनं तु घृतादिकम् ॥६१॥
तुल्यौ तिलान्ने कृसरत्रिसरावथ पिष्टकः ।
पूपोऽपूपः पूलिका तु पोलिका पोलि-पूपिकाः ॥६२॥
पूपल्यथेषत्पक्के स्युरभ्यूषाभ्योषपौलयः ।
निष्ठानं तु तेमनं स्यात्करम्भो दधिसक्तवः ॥ ६३ ॥
घृतपूरो घृतवरः पिष्टपूरश्च घार्त्तिकः ।

---

(१) मण्डं पुंसि क्लीबे च मस्तु क्लीबे "दध्नस्तु यदधस्तोयं तन्मस्तु च निगद्यते" इति धन्वन्तरिः।स सर्वरसाग्र्यं इति वा पाठः ।(२) कृसरः पुंसि क्लीबे च यदाह वैजयन्ती "तिलतन्दुलमाषैस्तु कृसरा त्रिसरात्रयीति"। (३) पिष्टकः पुंसि क्लीबे च। इहप्रस्तावात्सामान्यतोऽनुक्तान्यपि पिष्टनामानि त्रीणि पिष्टकः १ चमस २ चूर्णश्च ३ "पिष्टको नेत्ररोगे स्याद्धान्यादि चमसेऽपि चेति महेश्वरः"।(४) पौलि इति वा"किञ्चित् स्थूला भवेयुश्च तेभ्यः पूपलिकाः स्मृताः । सैवाङ्गारेषु सम्पक्का विज्ञेयाङ्गारकर्कटी" पूलिकाद्याः पञ्च स्थूलगण्डपर्य्यायाः ॥ (५) निष्ठानं पुंसि क्लीबे च ।

(१)चमसी[१] पिष्टवर्त्तिः[२] स्यादृट्टकस्त्ववसेकिमः[२] ॥ ६४ ॥
भृष्टा यवाः पुनर्धाना[(२)१] धानाचूर्णं तु सक्तवः[(३)१] ।
पृथुकश्चिपिटस्तुल्यौ[(४)१, २] लाजाः[(५)१] स्युः पुनरक्षताः[२] ॥ ६५ ॥
गोधूमचूर्णे समिता[(६)१] यवक्षोदे तु चिक्कसः[१] ।
गुडः[(७)१] इक्षुरसक्वाथः शर्करा तु सितोपला[२] ॥ ६६ ॥
सिता[२] च मधुधूलिस्तु[१] खण्डस्तद्विकृतिः[(८)२] पुनः ।
मत्स्यण्डी[१] फाणितं[(९)२] चापि रसालायां तु मार्जिता[२] ॥६७॥

---

(१) चमसी स्त्रीलिङ्गः गौडस्तु "चमसः पिष्टवर्तिः स्यादिति पुंस्याह चमसः पिष्टं चमसी मुद्गादिभिन्नकृता इति हैमोणादिहैमधातुपारायणयोः सामान्यवचनात् चमसीशब्दो वडीत्यादिप्रसिद्धेऽपि" "गृध्रसी चमसी मसीति" अमरः । चमसी मसूरादिपिष्टमिति क्षीरस्वामी । (२) धाना स्त्रीलिङ्गो बहुवचनान्तश्च । (३) सक्तुः पुंसि क्लीबे च । (४) यदाह पथ्यापथ्यकारः "आर्द्रपक्कं मूलधान्यं निस्तुषं पृथुकाभिधमिति मदनपालोऽपि " पक्वार्द्रा व्रीहयश्चैव चिपिटाः पृथुका मताः" इति । (५) लाजाः पुंस्त्रीलिङ्गो बहुवचनान्तश्च अक्षतशब्दः पुंक्लीबलिङ्गो बहुवचनान्तश्च । (६) समिता स्त्रियां चिक्कसः पुंसि क्लीबे च । (७) गुड इत्यत्र क्षारोऽपि यदाह अनेकार्थः "क्षारः काचे रसे गुडे " इति । (८) खण्डः पुंसि क्लीबे च । (९) फाणितमस्त्रियामिति वाचस्पतिः मत्स्यण्डी इत्यस्य "मिछरी" इति भाषाया प्रसिद्धिः फाणितमित्यस्य " फेणी " इति भाषायां प्रसिद्धिः ।

शिखरिण्यथ[2] यू[(1)1]यूषो[2] रसो[3] दुग्धं[1] तु सोमजम्[2] ।
गोरसः[3] क्षीर[4]मूधस्यं[5] स्तन्यं[6] पुंसवनं[7] पयः ॥ ६८ ॥
पयस्यं[1] घृतदध्यादि पेयूषो[1]ऽभिनवं पयः ।
उभे क्षीरस्य विकृती किलाटी[(2)1] कूर्चिकापि[2] च ॥ ६९ ॥
पायसं[1] परमान्नं[2] च क्षैरेयी[(3)3] क्षीरजं[1] दधि[2] ।
गोरसश्च[3] तद्घनं द्रप्सं[1] पत्रल[2]मित्यपि ॥ ७० ॥
घृतं[1] हवि[2]ष्यमाज्यं च[3] हवि[4]राघार[5]सर्पिषी[6] ।
ह्योगोदोहोद्भवं हैयङ्गवीनं[1] शरजं[1] पुनः ॥ ७१ ॥
दधिसारं[2] तक्रसारं[3] नवनीतं[4] नवोद्धृतम्[5] ।
दण्डाहतं[1] कालशेय[2]घोला[3]रिष्टानि[4] गोरसः[5] ॥ ७२ ॥
रसायन[6]मथार्धाम्बू[(4)1]दश्वित् श्वेतं समोदकम्[2] ।
तक्रं[1] पुनः पादजलं मथितं[1] वारिवर्जितम् ॥ ७३ ॥
सार्पिष्कं[1] दाधिकं[1] सर्पिर्दधिभ्यां संस्कृतं क्रमात् ।

---

(१) युः पुल्लिङ्ग. यूः युवौ युवः गोरसः पुंसि क्लीबे च । (२) किलाटापि आवन्तः क्वचित् । (३) क्षीरेयी इति वा पाठः । (४) उदश्विती उदश्वीन्ति क्लीबे ।

लवणोदकाभ्यां दकलौ(१)वणिक[१]मुदश्विति ॥ ७४ ॥
औदश्वित[१]मौदश्वित्कं[२] लवणे स्यात्तु लावणम्[१] ।
पैठरो[१]ख्ये[२] उखासिद्धे प्रयस्तं[१] तु सुसंस्कृतम् ॥ ७५ ॥
पक्के[१] राद्धं[२] च सिद्धं[३] च भृष्टं[१] पक्वं विनाम्बुना ।
भृष्टामिषं भटित्रं[१] स्याद्भूति[२]र्भरूटकं[३] च तत् ॥ ७६ ॥
शूल्यं[१] शूलाकृतं[२] मांसं निःक्वाथो[१] रसकः[२] समौ ।
प्रणीत[१]मुपसम्पन्नं(२) स्निग्धे[१] मसृणे[२]चिक्कणे[३] ॥ ७७ ॥
पिच्छिलं[१] तु विजि(३)विलं[२] विज्जलं[२] विजिलं[३,४] च तत् ।
भावितं[१] तु वासितं[२] स्यात्तुल्ये संमृष्ट[१]शोधिते[२] ॥ ७८ ॥
काञ्चिकं[१] काञ्जिकं[२] धान्यम्ला[३]रनालं[४] तुषोदकम्[५] ।
कुल्मा(४)षाभिषुता[६]वन्तिसोम[७]शुक्कानि[८] कुञ्जलम्[९] ॥ ७९ ॥
चुक्रं[१०] धातुघ्न[११]मुन्नाहं[१२] रक्षोघ्नं[१३] कुण्डगोलकम्[१४] ।
महारसं[१५] सुवीराम्लं[१६] सौवीरं[१७] (५) म्रक्षणं[१] पुनः ॥ ८० ॥

---

(१) लवणोदकपक्वस्येदं नाम। (२) उपसम्पन्नं सुष्ठुपक्वं । (३) विज्जिलं विजिलं विज्जलविजलमेतौ वा । (४) कुल्माषैर्यवादिभिरर्द्धश्विनैरभिषूयते परिवास्यते स इति कुल्माषाभिषुतः व्यस्तमपि तेन कल्माषमभिषुतश्चेति।(५) म्लक्ष म्लेच्छने चुरादिः परस्मैपदी अनटि म्रक्षणं भ्वादौ म्रक्ष रोगे इत्येके ।

तैलं [(१)]स्नेहोऽभ्यञ्जनं च वेसवार उपस्करः ।
स्याच्चिन्तिडीकं तु चुक्रं वृक्षाम्लं चाम्लवेतसे ॥ ८१ ॥
हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी ।
क्षवः क्षुताभिजननो राजिका राजसर्षपः ॥ ८२ ॥
आसुरी कृष्णिका चासौ कुस्तुम्बुरु तु धान्यकम् ।
[(२)]धन्या धन्याकं धान्याकं [(३)]मरिचं कृष्णमूषणम् ॥ ८३ ॥
कोलकं वेल्लजं धर्म्मपत्तनं यवनप्रियम् ।
शुण्ठी महौषधं [(४)]विश्वा नागरं विश्वभेषजम् ॥ ८४ ॥
वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा ।
तन्मूलं ग्रन्थिकं सर्व्वग्रन्थिकं चटकाशिरः ॥ ८५ ॥
त्रिकटु त्र्यूषणं व्योषमजाजी [(५)]जीरकः कणा ।
सहस्रवेधि वाल्हीकं [(६)]जतुकं हिङ्गु रामठम् ॥ ८६ ॥

---

(१) स्नेहः पुंसि क्लीबे च । (२) धन्या आवन्तः स्त्रीलिङ्गः । (३) मरीचमित्यपि । (४) विश्वा क्लीबे विश्वमिति । (५) जीरकः पुंसि क्लीबे च । (६) जतुकं पुंसि क्लीबे च ।

न्यादः स्वदनं खादनमशनं
निघसो वल्भनमभ्यवहारः ।
जग्धिर्जेक्षणभक्षणलेहाः
प्रत्यवसानं घसिराहारः ॥ ८७ ॥

प्सानो वष्वाणविष्वाणौ भोजनं जेमनादने ।
चर्व्वणं चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ॥८८॥
कल्यवर्त्तः प्रातराशः [(१)]सग्धिस्तु सहभोजनम् ।
ग्रासो गुडेरकः [(२)]पिण्डो गण्डोलः कवको गुडः ॥८९॥
गाण्डोलः [(३)]कवलस्तृप्ते त्वाघ्रातसुहिताशिताः ॥
तृप्तिः सौहित्यम[(४)]आघ्राणमथ [(५)]भुक्तसमुज्झिते ॥ ९० ॥
फेलो पिण्डोलिफेली च स्वोदरं पूरके पुनः ।
कुक्षिम्भरिरात्मम्भरिरुदरम्भरिरप्यथ ॥ ९१ ॥
आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।

---

(१) सग्धिः स्त्रियाम् । (२) पिण्डः क्लीबेऽपि पिण्डम् । (३) कवलः कवलमपि । (४) आघ्राण इति वा । (५) भुक्तोच्छिष्टे । (६) विजेतुमिच्छा विजिगीषा तया धिवार्ज्जितस्तस्मिन् ।

उदरपिशाचः सर्वान्नीनः सर्वान्नभक्षकः ॥ ९२ ॥
शाष्कुलः पिशिताश्युन्मदिष्णुस्तून्मादसंयुतः ।
गृध्नुस्तु गर्द्धनस्तृष्णक् लिप्सुर्लुब्धोऽभिलाषुकः ॥९३॥
लोलुपो लोलुभो लोभस्तृष्णा लिप्सा वशः स्पृहा ।
काङ्क्षाशंसा गर्द्धवाञ्छाशेच्छेहातृड्मनोरथाः ॥ ९४ ॥
कामोऽभिलाषो(१)ऽभिध्या तु परस्वेहोद्धतः पुनः ।
अविनीतो विनीतस्तु निभृतः प्रसृतो(२)ऽपि च ॥९५॥
विधेये विनयस्थः स्यादाश्रवो(३) वचने स्थितः ।
वश्यः प्रणेयो धृष्टस्तु वियातो धृष्णुधृष्णजौ ॥ ९६ ॥
वीक्षापन्नो(४) विलक्षोऽथाऽधृष्टे शालीनशारदौ ।
शुभंयुः(५) शुभसंयुक्तः स्यादहंयुरहङ्कृतः ॥ ९७ ॥
कामुकः कमिता कम्रोऽनुकः कामयिताभिकः ।

---

(१) अभिलाषः क्लीबेऽपि। (२) सृ गतौ क्तप्रत्ययेऽनुस्वारे त्वान्नेट् "तस्यैव मेऽनुरक्तस्य प्रसृतस्य हतैनस इति भागवतम्" प्रसृतस्य विनीतस्येति तट्टीका । (३) आश्रवा इति वा । (४) वीक्ष्यापन्नः वीक्षापन्न इत्युभयं भवति "वीक्ष्यापन्नः सविस्मयः" इति हारावली । (५) शुभंयोऽपीति हलायुधटीका।

कामनः (१)कमरोऽभीकः पञ्चभद्रस्तु विप्लुतः ॥ ९८ ॥
(२)व्यसनी हर्षमाणस्तु प्रमना हृष्टमानसः ।
विकुर्वाणो विचेतास्तु (३)दु-रन्तर्वि-परो मनाः ॥ ९९ ॥
मत्ते शौण्डोत्कटक्षीबा उत्कस्तूत्सुक उन्मनाः ।
उत्कण्ठितोऽभिशस्ते तु वाच्यक्षारितदूषिताः ॥१००॥
गुणैः (४)प्रतीते त्वाहतलक्षणः कृतलक्षणः ।
निर्लक्षणस्तु पाण्डुरपृष्ठः (५)सङ्कसुकोऽस्थिरे ॥ १०१ ॥
तूष्णींशीलस्तु तूष्णीको विवशो(६)ऽनिष्टदुष्टधीः ।
बद्धो निगडितो नद्धः कीलितो यन्त्रितः सितः॥१०२॥
सन्दानितः संयतश्च स्यादुद्यानं तु बन्धनम् ।
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ १०३ ॥

---

(१) कमनोऽभीक इति वा पाठः ।(२) व्यसनी इन्नन्तः ।(३) दुर्मनाः २ अन्तर्मनाः ३ विमनाः ४ सर्वे सान्ताः । (४) प्रतीते ख्याते इत्यर्थः आहतलक्षणः इति षडक्षरमखण्डं नाम यथा " इक्ष्वाकुवंश्यः ककुदं नृपाणां काकुत्स्थ इत्याहतलक्षणोऽभूदिति " रघुवंशम् । (५) सङ्कसिक इति वा अनिश्चिते इति क्षीरस्वामी । (६) अरिष्टदुष्टधीरित्यमरः अरिष्टेन मरणचिह्नेन श्वासादिना दुष्टा धीर्यस्येति क्षीरस्वामी ।

प्रतिक्षिप्तोऽधिक्षिप्तोऽवकृष्टनिष्कासितौ समौ ।
आत्तगन्धेऽभिभूतोऽप(१)ध्वस्ते न्यकृतेधिकृतौ ॥ १०४ ॥
निकृतस्तु विप्रकृतो न्यक्कारस्तु तिरस्क्रिया ।
परिभावो विप्रकारः (२)परा-पर्य्यभितो भवः ॥ १०५ ॥
अत्याकारो निकारश्च विप्रलब्धस्तु वञ्चितः ।
(३)स्वप्नक् शयालुर्निद्रालुर्घूर्णिते प्रचलायितः ॥ १०६ ॥
निद्राणः शयितः सुप्तो जागरूकस्तु जागरी ।
जागर्य्या स्याज्जागरणं जागरा जागरोऽपि च ॥१०७॥
विष्वगञ्चति वि(४)ष्वद्र्यङ् देवद्र्यङ् देवमञ्चति ।
सहाञ्चति तु सध्र्यङ् स्यात्तिर्य्यङ् पुनस्तिरोऽञ्चति॥१०८॥
संशयालुः संशयिता गृहयालु(५)र्गृहीतरि ।

---

(१) अवध्वस्त इति कश्चित् । (२) पराभवः ५ परिभवः ६ अभिभवः ७ । (३) स्वप्नक् स्वप्नजौ स्वप्नजः । (४) सर्वतो गमनशीलः सर्वपूजको वा विष्वद्र्यङ् विष्वद्र्यञ्चौ शसादौ विष्वद्रीचः इत्यादि स्त्रिया विष्वद्रीची " विष्वद्रीचीर्विक्षिपन् सैन्यवीची" इति माघे । पूजायां शसादौ विष्वद्र्यञ्चः विष्वद्र्यङ्भ्यामित्यादि स्त्रियां विष्वद्र्यीञ्ची क्लीबे विष्वद्र्यक्-ग् विष्वद्रीची विष्वद्र्यञ्चि । (५) ग्रहीतरि इति वा ।

पतयालुः पातुकः स्यात्समौ रोचिष्णुरोचनौ[(१)] ॥ १०९ ॥
दक्षिणार्हस्तु दाक्षिण्यो दक्षिणीयोऽथ दण्डितः ।
दापितः साधितोऽर्घ्यस्तु प्रतीक्ष्यः पूजितेऽर्हितः ११०
नमस्यितो नमसितो पचितो वञ्चितोऽर्चितः ।
पूजार्हणा संपर्य्यार्चा उपहार[(२)]बली समौ ॥ १११ ॥
विक्लवो विह्वलः स्थूलः पीवा[(३)] पीनश्च पीवरः ।
चक्षुष्यः सुभगो द्वेष्योऽक्षिगतोऽथांसलो बली ॥११२॥
निर्दिग्धो मांसलश्चोपचितोऽथ दुर्बलः कृशः ।
क्षामः क्षीणस्तनुश्छातस्तलिनामांसपेलवाः ॥ ११३ ॥
पिचण्डिलो बृहत्कुक्षिस्तुन्दितुन्दिकतुन्दिलाः ।
उदर्य्युदरिले विखविखुविग्रा अनासिके ॥ ११४ ॥
नतनासिकेऽवनाटोऽवटीटोऽवभ्रटोऽपि च ।
[(४)]खरणास्तु खरणसो नः क्षुद्रः [(५)]क्षुद्रनासिकः ॥ ११५ ॥

---

(१) रोचिनौ इत्यपि पाठः। (२) "कुर्वन् संध्यावलिपटहतां शूलिनि श्लाघनीयामिति" कालिदासः "उपहारो बलिः स्मृतः" इति हलायुधः। देवाग्रे निहिते नैवेद्ये इति तट्टीका वलीति स्त्रियां पुंसि च वलिः वलीतिरूपम्। (३) पीवानौ पीवानः। (४) खरणाः खरणसौ खरणसः। (५) क्षुद्राऽल्पा नासिकाऽस्येति विग्रहः।

खुरणाः स्यात्खुरणसौ उन्नसस्तूग्रनासिकः ।
पङ्गुः श्रोणः खलतिस्तु खल्वाट ऐन्द्रलुप्तिकः ॥ ११६ ॥
शिपिविष्टो वभ्रुरथ काणः कनन एकदृक् ।
पृश्निरल्पतनौ कुब्जे गडुलः कुकरे कुणिः ॥ ११७ ॥
निखर्व्वः खट्टनः खर्व्वः खर्वशाखश्च वामनः ।
अकर्ण एडो बधिरो दुश्चर्म्मा तु द्विनग्नकः ॥ ११८ ॥
चण्डश्च शिपिविष्टश्च खोडखोरौ तु खञ्जके ।
विकलाङ्गस्तु पोगण्ड ऊर्ध्वज्ञुरूर्ध्वजानुकः ॥ ११९ ॥
ऊर्ध्वज्ञश्चाप्यथ प्रज्ञुप्रज्ञौ विरलजानुके ।
संज्ञुसंज्ञौ युतजानौ वलिनौ वलिभौ समौ ॥ १२० ॥
[1]उदग्रदन् दन्तुरः स्यात् प्रलम्बाण्डस्तु मुष्करः ।
अन्धो गताक्षे उत्पश्य उन्मुखोऽधोमुखस्त्ववाङ्[2] १२१
मुण्डस्तु मुण्डितः केशी[3] केशवः केशिकोऽपि च ।
वलिरः केकरो वृद्धनाभौ तुन्दिलतुन्दिभौ ॥ १२२ ॥

---

(१) उदग्रदन्तौ उदग्रदन्तः इत्यादिरूपाणि । (२) अवाञ्चौ अवाञ्चः इत्यादिरूपाणि । (३) केशी इन्नंतः ।

आमयाव्यपटुर्ग्लानो ग्लास्नुर्विकृत आतुरः ।
व्याधितोऽभ्यमितोऽभ्यान्तो दद्रुरोगी तु दद्रुणः(१) ॥१२३॥
वामनः कच्छुरस्तुल्यौ सातिसारोऽतिसारकौ ।
वातकी वातरोगी स्यात् श्लेष्मलः श्लेष्मणः कफी १२४
क्लिन्ननेत्रे चिल्लचुल्लौ पिल्लोऽथार्शोयुगर्शसः ।
मूर्च्छिते मूर्त्तमूर्छालौ सिध्मलस्तु किलासिनिः ॥१२५॥
पित्तं मायुः कफः श्लेष्मा बलाशः स्नेहभूः खटः ।
रोगो रुजा रुगातङ्को मान्द्यं व्याधिरपाटवम् ॥ १२६ ॥
आर्मं आमयं आकल्यमुपतापो गदः समाः ।
क्षयः शोषो राजयक्ष्मा यक्ष्माऽथ (२)क्षुत् क्षुतं क्षवः ॥१२७॥
कासस्तु (३)क्षवथुः (४)पामा खसः कच्छूर्विचर्चिका ।
कण्डूः कण्डूयनं खर्ज्जूः कण्डुर्याथ क्षतं व्रणः ॥१२८॥
(५)अरुः (६)ईर्म्मं क्षणानुश्च रूढव्रणपदं किणः ।

(१) दद्रुः कुष्ठभेदः सा अस्त्यस्य दद्रुणः । (२) क्षुत् स्त्रिया क्षुतौ क्षुतः।(३) क्षयथु इति वा पाठः (४) पामा आवंतो गंगावत् पामशब्दोऽपि "पामपामे विचर्चिका" इत्यमरः। (५)अरुः अरुषी अरूंषि इत्यादिरूपं।(६) ईर्म्मशब्दः क्लीबे ।वैजयंतीकारस्तु"व्रणोपीर्म्मोऽपि न स्त्रियां"इति पुंस्यप्याह।

श्लीपदं पादवल्मीकः पादस्फोटो विपादिका ॥१२९॥
स्फोटकः पिटको गण्डः पृष्ठग्रन्थिः (१)पुनर्गड्डुः ।
श्वित्रं स्यात् पाण्डुरं कुष्ठं केशघ्नं त्विन्द्रलुप्तकम् ॥१३०॥
(२)सिध्म किलासं त्वक्पुष्पं (३)सिध्मं कोठस्तु मण्डलम् ।
गलगण्डो गण्डमालो रोहिणी तु गलाङ्कुरः ॥ १३१ ॥
हिक्का हेक्का च हृल्लासः प्रतिश्यायस्तु पीनसः ।
(४)शोथस्तु श्वयथुः शोफो दुर्नामार्शो गुदाङ्कुरः ॥१३२॥
छर्दः प्रच्छर्दिका (५)छर्दिर्वमथुर्वमनं वमिः ।
गुल्मः स्यादुदरग्रन्थिरुदावर्त्तो गुदग्रहः ॥ १३३ ॥
गतिर्नाडीव्रणे वृद्धिः (६)कुरण्डश्चाण्डवर्द्धने ।
अश्मरी स्यान्मूत्रकृच्छ्रे प्रमेहो बहुमूत्रता ॥ १३४ ॥
(७)आनाहस्तु विबन्धः स्याद् ग्रहणीरुक् प्रवाहिका ॥

---

(१) पुनर्गड्डुः पुंसि । (२) सिध्मनी सिध्मानि पुंसि नांतः सिध्मा । (३) अत्र सिध्मं सिध्मे सिध्मानि इत्यादिरूपाणि अकारांतत्वात् । (४) शोथोऽस्त्रीति वैजयंतीप्रामाण्येन क्लीबेऽपि शोथं । श्वयथुः पुंसि । दुर्नाम नांतः क्लीबे। अर्शः सांतः क्लीबे।(५)छर्दिः स्त्रिया, वमथुः पुंसि, वमिः स्त्रिया, गुल्मः पुंसि स्त्रिया च।(६)कुरुण्डः इति वा पाठः।(७)आनाहस्तु निबंधः स्यादिति पाठोऽपि।

व्याधिप्रभेदा विद्रधि(१)र्भगन्दरज्वरादयः ॥ १३५ ॥
दोषज्ञस्तु भिषग्(२) वैद्य आयुर्वेदी चिकित्सकः ।
रोगहार्य्यगदङ्कारो भेषजं तन्त्रमौषधम् ॥ १३६ ॥
भैषज्यमगदो जायु(३)श्चिकित्सा रुक्प्रतिक्रिया ।
(४)उपचर्योपचारौ च लङ्घनं त्वपतर्पणम् ॥ १३७ ॥
जाङ्गुलीको विषभिषक् स्वास्थ्ये वार्त्तमनामयम् ।
सह्यारोग्ये पटूल्लाघवार्त्तकल्यास्तु नीरुजि ॥ १३८ ॥
कुसृत्या विभवान्वेषी पार्श्वकः सन्धिजीवकः ।
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ॥१३९॥
चपलश्चिकुरो नीलीराग(५)स्तु स्थिरसौहृदः ।
ततो हरिद्रारागोऽन्यः सान्द्रस्निग्धस्तु मेदुरः ॥१४०॥
(६)गेहेनर्दी गेहेशूरः पिण्डीशूरोऽस्ति(७)मान् धनी ।
स्वस्थानस्थः परद्वेषी गोष्ठश्वोऽथापदि स्थितः ॥ १४१ ॥

---

(१) विद्रधिः स्त्रियां । (२) भिषक् भिषजौ भिषजः इत्यादि रूपाणि । (३) जायु. पुंसि । (४) उपचारोपचार्य्यौ च इति वा पाठ. । (५) "नीलीरागः सविज्ञेयः स्थिरप्रेमा च यः पुमानिति" हलायुधः । (६) गेहेनर्द्दिनौ गेहे नर्द्दिन. इत्यादि । (७) अस्तिमन्तौ अस्तिमन्तः इत्यादि ।

आपन्नोऽथापद्विपत्तिर्विपत् स्निग्धस्तु वत्सलः ।
उपाध्यभ्यागारिकौ तु कुटुम्बव्यापृते नरि ॥ १४२ ॥
जैवातृकस्तु दीर्घायुस्त्रासदायी तु शङ्करः ।
अभिपन्नः शरणार्थी कारणिकः परीक्षकः ॥ १४३ ॥
समर्द्धकस्तु वरदो व्रातीनाः सङ्घजीविनः ।
सभ्याः सदस्याः पार्षद्याः सभास्ताराः सभासदः १४४
सामाजिकाः सभा संसत् समाजः परिषत्सदः(१) ।
पर्षत्समज्या गोष्ठ्यास्थ्या आस्थानं समितिर्घटा ॥१४५॥
सांवत्सरो ज्यौतिषिको मौहूर्त्तिको निमित्तवित् ।
दैवज्ञगणकादेशिज्ञानिकार्त्तान्तिका अपि ॥ १४६ ॥
विप्रश्निकेक्षणिकौ च सैद्धान्तिकस्तु तान्त्रिकः ।
लेखकेऽक्षरपूर्वाः स्युश्चणजीवकचुञ्चवः ॥ १४७ ॥
वार्णिको(३) लिपिकरश्चाक्षरन्यासे लिपिर्लिबिः(४) ।

---

(१) सदः स्त्रिया क्लीबे च ।(२) १ अक्षरचणः २ अक्षरजीवकः ३ अक्षरचञ्चु ४ अक्षरचञ्चुरित्यपि । (३) वर्णिक इति वा पाठः । (४) इह प्रस्तावादनुक्तान्यपि लेखनीनामानि त्रीणि लेखनी ललन्तिका कलमश्च तत्र हारावली यथा "लेखनीवल्ललन्तिका" इति ।

मषिधानं मषिकूपी मलिनाम्बु मषी मसी ॥ १४८ ॥
कुलिकस्तु कुलश्रेष्ठी सभिको द्यूतकारकः ।
कितवो द्यूत(१)कृद् धूर्त्तोऽक्षधूर्त्तश्चाक्षदेविनि ॥ १४९ ॥
दुरोदरं कैतवं च द्यूतमक्षवती पणः ।
पा(२)शकः प्रासकोऽक्षश्च देवनस्तत्(३)पणो ग्लहः ॥१५०॥
अष्टापदः शारिफलं शारः शारिश्च खेलनी ।
परिणायस्तु शारीणां नयनं स्यात्समन्ततः ॥ १५१ ॥
समाह्वयः प्राणिद्यूतं व्यालग्राह्याहितुण्डिकः ।
स्यान्मनो(४)जवसस्ताततुल्यः शास्ता तु देशकः ॥१५२॥
सुकृती पुण्यवान् धन्यो मित्रयुर्मित्रवत्सलः ।
क्षेमङ्करोरिष्टतातिः शिवतातिः शिवङ्करः ॥ १५३ ॥
श्रद्धालुरास्तिकः श्राद्धो नास्तिकस्तद्विपर्यये ।
वैरङ्गिको विरागार्हो वीतदम्भस्त्वकल्कनः ॥ १५४ ॥

---

(१) द्यूतोदरं कैतवं च पुंसि क्लीबे च । (२) प्रासकः इत्यत्र अंसूच् क्षेपणे दिवादिः । (३) तत्तेषु अक्षेषु पणो बन्धो जय्यत्वेन स्थापितं धनमित्यर्थः । (४) मनुजवश्चतुरक्षरमित्यन्ये । यदाह व्याडिः “ जनः पितृसधर्मा यः स ताताहों मनोजवः” इति ।

प्रणाय्योऽसम्मतो(१)ऽन्वेष्टानुपद्यथ सहः क्षमः ।
शक्तः प्रभूष्णुर्भूतात्तस्त्वाविष्टः शिथिलः श्लथः ॥१५५॥
सम्वाहकोऽङ्गमर्दः स्यान्नष्टबीजस्तु निष्कलः ।
आसीन उपविष्टः स्यादूर्द्ध्व ऊर्ध्वन्दमः स्थितः ॥१५६॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिकदेशिकौ ।
प्रवासी तद्गणो (२)हारिः पाथेयं सम्बलं समे ॥ १५७ ॥
जङ्घालोऽतिजवो जङ्घाकरिको जाङ्घिको जवी ।
जवनस्त्वरिते वेगे रयो रंहस्(३)तरः स्यदः ॥ १५८ ॥
जवो वाजः प्रसरश्च मन्दगामी तु मन्थरः ।
कामङ्गाम्यनुकामीनोऽत्यन्तीनोऽत्यन्तगामिनि ॥१५९॥
सहायोऽभिचरोऽनो(४)र्जीवि-गामि-चर-प्लवाः ।
सेवकोऽथ सेवा भक्तिः परिचर्य्या प्रसादना ॥ १६० ॥

---

(१) अन्वेष्टारौ अन्वेष्टारः इत्यादि । (२) हारिः स्त्रियां संबलं पुंसि क्लीबे च । (३) रहसी रहांसि तरसी तरांसि इत्यादि । (४) अनुजीवी ३ अनुगामी ४ अनुचरः ५ अनुप्लवः ६ ।

शुश्रूषाराधनोपास्तिवरिवस्यापरीष्टयः ।
उपचारः पदातिस्तु पत्तिः पद्गः पदातिकः ॥ १६१ ॥
पादातिकः पादचारी पदाजिपदिकावपि ।
सरः[(१)] पुरोऽग्रतोऽग्रेभ्यः पुरस्तो गम-गामिगाः ॥ १६२ ॥
प्रष्ठोऽथावेशिकागन्तू [(२)]प्राघुणोऽभ्यागतोऽतिथिः ।
[(३)]प्राघूर्णकोऽथावेशिकमातिथ्यं [(४)]चातिथेय्यपि ॥ १६३ ॥
सूर्य्योढस्तु स सम्प्राप्तो यः सूर्य्येऽस्तङ्गतेऽतिथिः ।
पादार्थं पाद्यमर्घार्थमर्घ्यं वार्य्यथ गौरवम् ॥ १६४ ॥
अभ्युत्थानं व्यथकस्तु स्यान्मर्म्मस्पृगरुन्तुदः ।
ग्रामेयके तु ग्रामीणग्राम्यौ लोको जनः प्रजा ॥१६५॥
स्यादामुष्यायणोऽमुष्यपुत्रः प्रख्यातवप्तृकः ।
कुल्यः कुलीनोऽभिजातः कौलेयकमहाकुलौ ॥१६६॥
जात्यो गोत्रं तु सन्तानोऽन्ववायोऽभिजनः कुलम् ।

---

(१) पुरःसरः १ अग्रतःसरः २ अग्रेसरः ३ पुरोगमः ४ पुरोगामी ५ पुरोगः ६ । (२) प्रघूर्ण इति वा पाठः । (३) प्रघूर्णिको वा पाठः ।(४) आतिथेयी स्त्रियां आतिथेयि इति क्लीबे ।

अन्वयो जननं वंशः स्त्री नारी वनिता वधूः ॥१६७॥
वशा सीमन्तिनी वामा पर्णिनी महिलाऽबला ।
योषा योषित् विशेषास्तु कान्ता भीरुर्नितम्बिनी॥१६८॥
प्रमदा सुन्दरी रामा रमणी ललनाङ्गना ।
स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥ १६९ ॥
विशेषिताङ्गकर्म्मा स्त्री यथा तरललोचना ।
अलसेक्षणा मृगाक्षी मत्तेभगमनापि च ॥ १७० ॥

---

(१) स्वकीयेन असाधारणगुणेन यथा तरललोचना अलसेक्षणा इत्यत्र तरलत्वं लोचनस्यासाधारण्यम् । अलसमीक्षणं यस्याः । अत्र क्रियाया असाधारण्यं । उपमानं यथा मृगाक्षी मत्तेभगमना । मनोज्ञादिपदेन यथा वामे मनोज्ञे अक्षिणी यस्या आदिशब्दात् सुस्मितादयः अत्र शोभनत्वे तस्मिन् क्रियायाः विशेषणम् । अत्रापि तरललोचना इत्यत्र लोचनस्य तरलत्वगुणो विशेषणं । अलसेक्षणा इत्यत्र ईक्षणक्रियायाः अलसत्वगुणो विशेषण । मृगाक्षी इत्यत्र अक्ष्णः उपमानं मत्तेभगमना इत्यत्र गमनक्रियाया उपमानं । वामाक्षीत्यत्र अक्ष्णः वामत्वं मनोज्ञत्वं विशेषणं । सुस्मितेत्यत्र स्मितक्रियायाः शोभनत्वं विशेषणं । एवं स्वगुणेन विशेषिताङ्गा तरललोचना । स्वगुणेन विशेषितकर्म्मा अलसेक्षणा । उपमानेन विशेषिताङ्गा मृगाक्षी । उपमानेन विशेषितकर्म्मा मत्तेभगमना । मनोज्ञपदेन विशेषिताङ्गा वामाक्षी । अनुगामीन विशोषितकर्म्मा सस्मिता ।

वामाक्षी सुस्मिताऽस्याः स्वं मानलीलास्मरादयः ।
[1]लीला [2]विलासो [3]विच्छित्तिर्[4]विब्वोकः [5]किलिकिञ्चितम् ॥१७१॥
[6]मोट्टायितं [7]कुट्टमितं [8]ललितं [9]विहृतं तथा ।
[10]विभ्रमश्चेत्यलङ्काराः [11]स्त्रीणां स्वाभाविका दश ॥१७२॥
[12]प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः ।

---

(१) स्त्रीणां स्वाभाविका लीलाद्या दशालंकारास्तेषां लक्षणानि " प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः । (२) विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु । (३) मण्डनाद्यादरन्यासो विच्छित्ती रूपदर्पतः । (४) विब्वोकोऽभिमतप्राप्तावपि गर्वादनादरः । ( ५ ) हर्षाद्रुदितगीतादिन्यामिश्रं किलकिञ्चितम् । (६) मोट्टायितं प्रियं स्मृत्वा साङ्गभङ्गविजृम्भणम् ॥ अत्र मोटायितमित्येकटकारोपि पाठः ।(७) दुखोपचारः सौख्येऽपि हर्षात्कुट्टमितं मतं । (८) अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितं ( मसृणाङ्गन्यासः )। (९) व्यक्तव्याभाषणं व्याजाद्विहृतं दर्शितेङ्गितम् ।(१०) चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः।(११) इत्येवमलंक्रियन्ते एभिरित्यलङ्काराः स्त्रीणामिति न पुंसां रतिभावात् हृदयगोचरीभूताद्भवन्ति स्वाभाविकास्ते च दशसंख्याः स्युरिति । (१२) प्रगल्भस्य प्रौढस्य भावः प्रागल्भ्यं संप्रयोगे निर्भयत्वमित्यर्थः ।

दीप्तिश्चायलजा भावहावहेलास्त्रयोऽङ्गजाः(१) ॥१७३॥

सा कोपना भामिनी स्यात् छेका(२) मत्ता च वाणिनी ।

कन्या कनी कुमारी च गौरी तु नग्निकाऽरजाः ॥१७४॥

मध्यमा तु दुष्टरजास्तरुणी युवतिश्चरी ।

तलुनी दिक्करी वर्ध्या पतिंवरा स्वयम्वरा ॥ १७५ ॥

सुवासिनी वधूटी स्याच्चिरिण्ट्यथ सधर्म्मिणी ।

पत्नी सहचरी पाणिगृहीती गृहिणी गृहाः ॥ १७६ ॥

दाराः(३) क्षेत्रं वधूर्भार्य्या जनी जाया परिग्रहः ।

द्वितीयोढा कलत्रञ्च पुरन्ध्री तु कुटुम्बिनी ॥ १७७ ॥

---

(१) अङ्गजास्त्रयोऽलङ्काराः। तत्र भ्रूतारकादीनां बहुविकारो हावः। १ अङ्गस्याल्पो विकारो भावः २ अङ्गस्य प्रचुरो विकारो हेला ३ यदुक्तं भरतेन " अलङ्काराश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः । यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः इति । देहात्मकं भवेत्सत्वं सत्वाद्भावः समुत्थितः । भावात्समुत्थितो हावो हावाद्धेला समुत्थिता" इति च स एव कथयति । (२) छेका अवसरज्ञा । (३) दाराः पुल्लिङ्गो बहुवचनान्तश्च ।

प्रजावती भ्रातुर्जाया[(१)] सूनोः स्नुषा जनी वधूः ।
भ्रातृवर्गस्य या जाया यातरस्ताः परस्परम् ॥ १७८ ॥
वीरपत्नी वीरभार्य्या कुलस्त्री कुलबालिका[(२)] ।
प्रेयसी दयिता कान्ता प्राणेशा वल्लभा प्रिया ॥१७९॥
हृदयेशा प्राणसमा प्रेष्ठा प्रणयिनी च सा ।
प्रेयस्याद्याः[(३)] पुंसि पत्यौ भर्त्ता सेक्ता पतिर्वरः ॥१८०॥
विवोढा रमणो भोक्ता रुच्यो वरयिता धवः ।
जन्यास्तु तस्य सुहृदो विवाहः पाणिपीडनम् ॥१८१॥
पाणिग्रहणमुद्वाह उपात् यामयमावपि[(४)] ।
दारकर्म परिणयो जामाता दुहितुः पतिः ॥ १८२ ॥

---

(१) भ्रातुर्जाया इत्यत्र "स्वतां विद्यायोनिसम्बन्धे" इति षष्ठ्यलोपः द्रक्ष्यसि भ्रातृजायामिति मेघदूते सप्तमीसमासः । भ्रातृजायाऽपि यदाह रघुवंशे "तां भ्रातृजायां पुलिनेऽवतार्य्य" इति । (२) कुलपालिका इत्यपि पाठः । "कुलपालिका" इत्यमरः । (३) प्रेयस्याद्या दश शब्दाः पुंसि वर्त्तमानाः सन्तः पत्यौ भर्त्तरि वर्त्तन्ते ते यथा प्रेयान् १ दयित. २ कान्तः ३ प्राणेशः ४ वल्लभः ५ प्रियः ६ हृदयेशः ७ प्राणसम. ८ प्रेष्ठः ९ प्रणयी १० इति । (४) उपयामः ५ उपयमः ६ ।

उपपतिस्तु जारः स्याद् भुजङ्गो गणिकापतिः ।
जम्पती दम्पती जायापती भार्य्यापती समाः ॥१८३॥
(१)यौतकं युतयोर्देयं सुदायो हरणं च तत् ।
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः॥१८४॥
सैरन्ध्री यान्यवेश्मस्था स्वतन्त्रा शिल्पजीविनी ।
असिक्न्यन्तःपुरप्रेष्या दूतीसञ्चारिके समे ॥ १८५ ॥
प्रज्ञी प्रज्ञा (२)प्रजानन्त्यां प्राज्ञा तु प्रज्ञयान्विता ।
स्यादाभीरी महाशूद्री जातिपुंयोगयोः समे ॥१८६॥
पुंयुज्याचार्य्याचार्य्याणी मातुलानी तु मातुली ।
उपाध्यायान्युपाध्यायी क्षत्रियर्य्यर्य्यौ च शूद्र्यपि॥१८७॥
स्वत आचार्य्या शूद्रा च क्षत्रिया क्षत्रियाण्यपि ।
(३)उपाध्याय्युपाध्याया स्याद(४)र्य्याण्यर्य्यौ पुनः समे ॥ १८८ ॥
(५)दिधिषूस्तु पुनर्भूर्द्विरूढा (६)स्याद्दिधिषूःपतिः ।

---

(१) युतयोः वधूवरयोर्देयं परिधानवस्त्राभरणादि । (२) प्रजानन्त्यां पण्डितायां। (३) उपाध्यायो वेदपाठकस्तस्य स्त्री उपाध्यायी उपाध्याया वा। (४) अर्यस्य वैश्यस्य स्त्री अर्य्या । (५) दिधिष्वौ दिधिष्वः दिधीषूरित्यपि "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता" इति मतान्तरम्। (६)दिधिषुःपतिः इति ह्रस्वान्तःपाठो युक्तः ।

स तु द्विजोऽग्रे[1]दिधिषूर्यस्य स्यात्सैव गेहिनी ॥ १८९ ॥
ज्येष्ठेऽनूढे परिवेत्तानुजो दार[2]परिग्रही ।
तस्य ज्येष्ठः परिवित्तिर्जाया तु परिवेदिनी ॥ १९० ॥
वृषस्यन्ती कामुकी स्यादिच्छायुक्ता तु कामुका ।
कृत[3]सापत्निकाऽध्यूढाधिविन्नाथ पतिव्रता ॥ १९१ ॥
एकपत्नी सुचरित्रा साध्वी सत्यसती त्वरी ।
पुंश्चली [4]चर्षणी बन्धक्यविनीता च पांसुला ॥ १९२ ॥
स्वैरिणी कुलटा याति या प्रियं साभिसारिका ।
वयस्यालिः सखी सध्रीच्यशिश्वी तु शिशुं विना ॥ १९३ ॥
पतिवत्नी जीवत्पतिर्विश्वस्ता विधवा समे ।
[5]निर्वीरा निष्पतिसुता जीवत्तोका तु [6]जीवसूः ॥ १९४ ॥

---

(१) अग्रेदिधीषु इति ह्रस्वान्तोपि पाठः । (२) दारपरिग्रही परिणीतकलत्रः । तत्र स्मृतिः "येऽग्रजेष्वकलत्रेषु कुर्वते दारसंग्रहं । ज्ञेयास्ते परिवेत्तारः परिवित्तिस्तु पूर्वजः" इति । (३) कृतं सापत्न्यं सपत्नीभावो यस्याः सा । अध्यूढा " अध्यूढ ईश्वरेऽध्यूढा कृतसापत्न्ययोषिति " इति श्रीधरः । अधि उपरि विन्दत्यस्यां इत्यधिविन्ना । (४) धर्षणी इति पाठ । (५) " रहिता पतिपुत्राभ्यां निर्वीरेत्यभिधीयते " अवीरा इत्यमरः । (६) जीवसूशब्दस्य जीवस्वौ जीवस्वः इत्यादिरूपाणि । जीवत्पुत्रा इति वा ।

नश्यत्प्रसूतिका निन्दुः सश्मश्रुर्नरमालिनी ।
कात्यायनी त्वर्द्धवृद्धा काषायवसनाऽधवा ॥ १९५ ॥
श्रवणा भिक्षुकी मुण्डा पोटा तु स्त्री नृलक्षणा ।
साधारणा स्त्री गणिका वेश्या पण्य[(१)]-पणाङ्गना ॥१९६॥
भुजिष्या लञ्जिका रूपाजीवा वारवधूः पुनः ।
सा वारमुख्याथ चुन्दी कुट्टनी शम्भली समाः॥१९७॥
पोटा वोटा च चेटी च दासी च कुटहारिका ।
लग्ना तु कोटवी वृद्धा पलिक्न्यथ रजस्वला ॥ १९८ ॥
पुष्पवत्यधि[(२)]रात्रेयी स्त्रीधर्मिणी मलिन्यवीः ।
उदक्या ऋतुमती च पुष्पहीना तु निष्कला ॥१९९॥
राका तु सरजाः कन्या स्त्रीधर्मः पुष्पमार्त्तवम् ।
[(३)]रजस्तत्कालस्तु ऋतुः सुरतं मोहनं रतम् ॥ २०० ॥
संवेशनं सम्प्रयोगः सम्भोगश्च रहो रतिः ।
ग्राम्यधर्मो निधुवनं कामकेलिः पशुक्रिया ॥ २०१ ॥

---

(१) पण्याङ्गना ४ पणाङ्गना ५ । (२) अविरात्रेयी इति वा पाठः । अवीः अव्यौ अव्यः इति रूपम् । (३) रजः क्लीबे ऋतुः पुंसि ।

व्यवायो मैथुनं स्त्रीपुंसौ द्वंद्वं मिथुनं च तत् ।
अन्तर्वत्नी गुर्विणी स्याद्गर्भवत्युदरिण्यपि ॥ २०२ ॥
आपन्नसत्वा गुर्वी च श्रद्धालुर्दोहदान्विता ।
विजाता च प्रजाता च जातापत्या प्रसूतिका ॥२०३॥
गर्भस्तु गरभो भ्रूणो दोहृदलक्षणं(१) च सः ।
गर्भाशयो जरायू(२)ल्वे(३) कललो(४)ल्वे पुनः समे ॥ २०४ ॥
(५) दोहदं दौहृदं श्रद्धा लालसा सूतिमासि तु ।
वैजननो विजननं प्रसवो नन्दनः पुनः ॥ २०५ ॥
उद्वहोऽ(६)ङ्गात्मजः सूनुस्तनयो दारकः सुतः ।
पुत्रो दुहितरि (७)स्त्रीत्वे तोकापत्यप्रसूतयः ॥ २०६ ॥
(८)तुक् प्रजोभयोर्भ्रात्रीयो भ्रातृव्यो भ्रातुरात्मजे ।

---

(१) दोहृदलक्षणं क्लीबे । (२) जरायुः पुंसि । (३) उल्वः पुंसि क्लीबे च । (४) शुक्रशोणितसमवायस्य " सप्ताहं कललं विद्यात् ततः सप्ताह बुद्बुदम् । बुद्बुदाज्जायते पेशी पेशीतोऽपि यतं भवेत् " इत्याचाराङ्गवृत्तिः । (५) दोहदं पुंसि क्लीबे च । (६) अङ्गजः २ आत्मजः ४ । (७) स्त्रीत्वे नन्दनादयो दुहितरि स्युः यथा नन्दनी उद्वहा अङ्गजा आत्मजा इत्यादयः। (८) तुक् तुकौ तुकः इत्यादिरूपं ।

स्वस्रीयो भागिनेयश्च जामेयः कुतपश्च सः ॥ २०७ ॥
नप्ता पौत्रः पुत्रपुत्रो दौहित्रो दुहितुः सुतः ।
प्रतिनप्ता प्रपौत्रः स्यात् तत्पुत्रस्तु परम्परः[१] ॥ २०८ ॥
पैतृष्वसेयः स्यात्पैतृष्वस्रीयस्तुक् पितृष्वसुः ।
मातृष्वस्रीयस्तुक् मातृष्वसुर्मातृष्वसेयवत् ॥ २०९ ॥
वि[२]मातृजो वैमात्रेयो द्वैमातुरो द्विमातृजः ।
सत्यास्तु तनये साम्यातुरवद्भद्रमातुरः ॥ २१० ॥
सौभागिनेयकानीनौ सुभगाकन्ययोः सुतौ ।
पौन[३]र्भवपारस्त्रैणेयौ पुनर्भूपरस्त्रियोः ॥ २११ ॥
दास्या दासेरदासेयौ नाटेरस्तु नटीसुतः ।
बन्धुलो बान्धकिनेयः कौलटेरोऽसतीसुतः ॥ २१२ ॥
स तु कौलटिनेयः स्याद् यो भि[४]क्षुकसतीसुतः ।

---

(१) " परम्पर प्रपौत्रादौ मृगभेदे परम्पर । परम्परा परीपाट्यं सन्तानेऽपि वधे क्वचित् "।(२)विरुद्धा माता विमाता तस्यां जातः।(३) पुनरक्षतयोनित्वाद्वाह्यते वा यथाविधि। सा पुनर्भूः सुतस्तस्याः पौनर्भव उदाहृत इतिस्मृतिः । (४) भिक्षुकी चासौ सतीच भिक्षुकसती"पुंवत्कर्मधारय इति पुंवद्भावः।

द्वावप्येतौ कौलटेयौ क्षेत्रजो[(१)] देवरादिजः ॥ २१३ ॥
स्वजाते त्वौरसौरस्यौ मृते भर्त्तरि जारजः ।
गोलकोऽथामृते कुण्डो भ्राता तु स्यात्सहोदरः॥२१४॥
समानोदर्य्यसोदर्य्यसगर्भसहजा अपि ।
सोदरश्च स तु ज्येष्ठः स्यात् पित्र्यः पूर्वजोऽग्रजः॥२१५॥
जघन्यजे यविष्ठः स्यात् कनिष्ठोऽवरजोऽनुजः ।
स यवीयान् कनीयांश्च पितृ[(२)]व्यशालमातुलाः ॥ २१६ ॥
पितुः पत्न्याश्च मातुश्च भ्रातरो देवृ[(३)]देवरौ ।
देवा चावरजे पत्युर्जामिस्तु भगिनी स्वसा ॥ २१७ ॥
ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनीत्यपि ।
पत्न्यास्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः कुली च सा ॥२१८॥
कनिष्ठाश्वालिका हाली य[(४)]न्त्रिणी केलिकुञ्चिका ।

---

(१) क्षेत्रे कलत्रे जातः क्षेत्रजः अत्र तल्पज इति केचित् । (२) पितुर्भ्राता पितृव्यः । पत्न्या भ्राता श्यालः । मातुर्भ्राता मातुलः इति प्रत्येकं संबंधः । (३) देवा देवरौ देवरः।देवरः देवरौ देवराः । देवा देवानौ देवानः इत्यादिरूपाणि । (४) यन्त्रिणी इति वा पाठः ।

केलिर्द्रवः परीहासः क्रीडा लीला च नर्म च ॥ २१९ ॥
देवनं कूर्दनं खेला ललनं वर्करोऽपि च ।
वप्ता(१) तु जनकस्तातो बीजी जनयिता पिता ॥ २२० ॥
पितामहस्तस्य पिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं माताम्बा जननी प्रसूः ॥ २२१ ॥
सवित्री जनयित्री च कृमिला तु बहुप्रसूः ।
धात्री तु स्यादुपमाता वीरमाता तु वीरसूः ॥ २२२ ॥
श्वश्रूर्माता पतिपत्न्योः श्वशुरस्तु तयोः पिता ।
पितरस्तु पितुर्वंश्या मातुर्मातामहाः कुले ॥ २२३ ॥
पितरौ मातापितरौ मातरपितरौ पिता च माता च ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ २२४ ॥
भ्राता च भगिनी चापि भ्रातरावथ बान्धवः ।
स्वो ज्ञातिः स्वजनो बन्धुः सगोत्रश्च निजः पुनः ॥२२५॥

---

( १ ) "स्त्रीक्षेत्रमौषधीपात्रं बीजं चाप्यमृताशनम् । तत्र वप्ता नरः स्वामी जन्तुस्तत्र निमिष्यते" इति गरुडपुराणम् ।

आत्मीयः स्वः स्वकीयश्च सपिण्डास्तु सनाभयः ।

तृतीयाप्रकृतिः पण्डः षण्ढः क्लीबो नपुंसकम् ॥ २२६ ॥

इन्द्रियायतनमङ्ग-विग्रहौ
क्षेत्रगात्रतनुभूघनास्तनूः ।
मूर्त्तिमत्करणकाय-मूर्त्तयो
बेरसंहननदेहसञ्चराः ॥ २२७[१] ॥

घनो बन्धः पुरं पिण्डो वपुः पुद्गलवर्ष्मणी ।

कलेवरं शरीरोऽस्मिन्नजीवे कुणपं शवः ॥ २२८[२] ॥

मृतकं रुण्डकबन्धौ त्वपशीर्षे क्रियायुजि ।

वयांसि तु दशाः प्रायाः सामुद्रं देहलक्षणम् ॥ २२९[३] ॥

एकदेशे प्रतीकोऽङ्गावयवावपघनो अपि ।

---

(१) तनुः तनूः स्त्रियाम् । बेरः पुंसि क्लीबे च । देहः पुंसि क्लीबे च । (२) पिण्डः पुंसि क्लीबे च । अपगतं शीर्षं यस्य अपशीर्षं तस्मिन् अपशीर्षे क्रियायुजि नृत्यति शरीरे इत्यर्थः ॥ (३) सामुद्रो देहलक्षणे । सामुद्रं त्र समुद्रीयलवणादिषु भेद्यवत् इति पुंस्यपि महेश्वरः ।

उत्तमाङ्गं शिरो मूर्द्धा मौलिर्मुण्डं (१)कमस्तकं ॥ २३० ॥
वराङ्गं करणत्राणं शीर्षं मस्तकमित्यपि ।
तज्जाः केशास्तीर्थवाकाश्चिकुराः कुन्तलाः (२)कचाः ॥ २३१ ॥
वालाः स्युस्(३)तत्पराः पाशो रचना भार उच्चयः ।
हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः ॥ २३२ ॥
अलकस्तु कर्करालः खङ्करश्चूर्णकुन्तलः ।
स तु भाले भ्रमरकः कुरुलो भ्रमरालकः ॥ २३३ ॥
धम्मिल्लः संयताः केशाः केशवेषे कबर्यथ ।
(४)वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥ २३४ ॥

---

( १ ) मूर्द्धा पुंसि मौलिः पुंसि क्लीबे च मुण्डं पुंसि क्लीबे च कं पुंसि क्लीबे च मस्तकमपि क्लीबे पुंसि च । ( २ ) तस्मिन् शिरसि जातास्तज्जा इति यौगिकसूचनं तेन शिरसिजाः शिरोरुहाः मूर्द्धजा इत्यादि ॥ प्राकृते तु ककारस्य हादेशात् चिहुरा इति संस्कृतेऽपि क्वचित् । ( ३ ) तेभ्यः केशादिशब्देभ्यः पराः पाशादयः सप्त शब्दाः केशभूयस्त्ववाचका भवन्ति यथा केशपाशः १ केशरचना २ केशभारः ३ केशोच्चयः ४ केशहस्तः ५ केशपक्षः ६ केशकलापः ७ एवं कचादिभ्योऽप्यूह्यं यौगिकत्वात् । ( ४ ) वेणिः दीर्घान्तोऽपि ।

केशेषु वर्त्म सीमन्तः पलितं[(1)] पाण्डुरः कचः ।
चूडा केशी केशपाशी शिखा शिखण्डकाः समाः ॥ २३५ ॥
सा बालानां काकपक्षः शिखण्डकशिखाण्डकौ ।
तुण्डमास्यं मुखं[(2)] वक्त्रं लपनं वदनानने ॥ २३६ ॥
भाले गोध्यलिकालीकललाटानि श्रुतौ श्रवः ।
शब्दाधिष्ठानपैक्षूषमहानादध्वनिग्रहाः ॥ २३७ ॥
कर्णः श्रोत्रं श्रवणं च वेष्टनं कर्णशष्कुली ।
पालिस्तु कर्णलतिका शङ्खो भालश्रवोऽन्तरे ॥ २३८ ॥
चक्षुरक्षीक्षणं नेत्रं नयनं दृष्टिरम्बकम् ।
लोचनं दर्शनं दृक् च तत्तारा[(3)] तु कनीनिका ॥ २३९ ॥
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् ।
[(4)]असौम्येऽक्षिण्यनक्षि स्यादीक्षणं तु निशामनम् ॥ २४० ॥
निभालनं निशमनं निध्यानमवलोकनम् ।
दर्शनं द्योतनं निर्वर्णनं चाथार्द्धवीक्षणम् ॥ २४१ ॥

---

( १ ) पतितं पुंसि क्लीबे च । ( २ ) मुखं पुंसि क्लीबे च । ( ३ ) तारकापि तारकावर्णका इति इकारस्याभावः । तारकाक्ष्णः कनीनिकेत्यमरः । ( ४ ) असौम्ये विकारयुक्ते चक्षुषि अनक्षि ।

उत्तमाङ्गं शिरो मूर्द्धा मौलिर्मुण्डं कमस्तके[१] ॥ २३० ॥
वराङ्गं करणत्राणं शीर्षं मस्तकमित्यपि ।
तज्जाः[२] केशास्तीर्थवाकाश्चिकुराः कुन्तलाः कचाः ॥ २३१ ॥
वालाः स्युस्तत्पराः[३] पाशो रचनो भारं उच्चयः ।
हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः ॥ २३२ ॥
अलकस्तु कर्कराले: खङ्करश्चूर्णकुन्तलैः ।
स तु भाले भ्रमरकः कुरुलो भ्रमरालकः ॥ २३३ ॥
धम्मिल्लाः संयताः केशाः केशवेषे कबर्य्यथ ।
वेणिः[४] प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥ २३४ ॥

---

( १ ) मूर्द्धा पुंसि मौलिः पुंसि क्लीबे च मुण्डं पुंसि क्लीबे च कं पुंसि क्लीबे च मस्तकमपि क्लीबे पुंसि च। ( २ ) तस्मिन् शिरसि जातास्तज्जा इति यौगिकसूचनं तेन शिरसिजाः शिरोरुहाः मूर्द्धजा इत्यादि ॥ प्राकृते तु ककारस्य हादेशात् चिहुरा इति संस्कृतेऽपि क्वचित्। ( ३ ) तेभ्यः केशादिशब्देभ्यः पराः पाशादयः सप्त शब्दाः केशभूयस्त्ववाचका भवन्ति यथा केशपाशः १ केशरचना २ केशभारः ३ केशोच्चय. ४ केशहस्तः ५ केशपक्षः ६ केशकलापः ७ एवं कचादिभ्योऽप्यूह्यं यौगिकत्वात्। ( ४ ) वेणिः दीर्घान्तोऽपि ।

केशेषु वर्त्म सीमन्तः पलितं[1] पाण्डुरः कचः ।
चूडा केशी केशपाशी शिखा शिखण्डिकाः समाः ॥२३५॥
सा बालानां काकपक्षः शिखण्डकशिखाण्डकौ ।
तुण्डमास्यं मुखं[2] वक्त्रं लपनं वदनानने ॥ २३६ ॥
भाले गोध्यलिकालीकललाटानि श्रुतौ श्रवः ।
शब्दाधिष्ठानपैञ्जूषमहानादध्वनिग्रहाः ॥ २३७ ॥
कर्णः श्रोत्रं श्रवणं च वेष्टनं कर्णशष्कुली ।
पालिस्तु कर्णलतिका शङ्खो भालश्रवोऽन्तरे ॥ २३८ ॥
चक्षुरक्षीक्षणं नेत्रं नयनं दृष्टिरम्बकम् ।
लोचनं दर्शनं दृक् च तत्तारा[3] तु कनीनिका ॥ २३९ ॥
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् ।
[4]असौम्येऽक्षिण्यनक्षि स्यादीक्षणं तु निशामनम् ॥ २४० ॥
निभालनं निशमनं निध्यानमवलोकनम् ।
दर्शनं द्योतनं निर्वर्णनं चाथार्द्धवीक्षणम् ॥ २४१ ॥

---

(१) पलितं पुंसि क्लीबे च । (२) मुखं पुंसि क्लीबे च । (३) तारकापि तारकावर्णका इति इकारस्याभावः । तारकाक्ष्णः कनीनिकेत्यमरः । (४) असौम्ये विकारयुक्ते चक्षुषि अनक्षि ।

अपाङ्गदर्शनं[२] काक्षः[३] कटाक्षो[४]ऽक्षिविकूणितम्[५] ।
स्यादुन्मीलनम्[१]उन्मेषो[२] निमेष[१]स्तु निमीलनम्[२] ॥ २४२ ॥
अक्ष्णोर्बाह्यान्तावपाङ्गौ[१] भ्रूरूर्द्ध्वं[१] रोमपद्धतिः ।
सकोपभ्रूविकारे स्यात् (१)भ्रे-भ्रु-भ्रू-भृ-परा कुटिः[४] ॥ २४३ ॥
कूर्चं[१] कूर्पं[२] भ्रुवोर्मध्ये (२)पक्ष्म स्यान्नेत्ररोमाणि ।
गन्धज्ञा[१] नासिका[२] नासा[३] घ्राणं[४] घोणा[५] विकूणिका[६] ॥ १४४ ॥
(३)नक्रं[७] नकुटकं[८] शिङ्घिन्यो[९]ष्ठो[१]ऽधरो[२] रदच्छदः[३] ।
दन्तवस्त्रं[४] च तत्प्रान्तौ (४)सृक्कणी[१] असिकं[१] त्वधः ॥ २४५ ॥
असिकाधस्तु चिबुकं[१] स्याद् गल्लः[१] सृक्कणः परः ।
गल्लात्परः कपोलश्च[१] परो गण्डः[१] कपोलतः ॥ २४६ ॥
ततो (५)हनुः[१] श्मश्रु[१] कूर्चम्[२]आस्यलोम[३] च मासुरी[४] ।
दाढिका[१] दंष्ट्रिका[२] दाढा दंष्ट्रा[१] जम्भो[३] द्विजा[१] रदाः ॥२४७॥

---

(१) भ्रकुटिः १ भ्रुकुटिः २ भ्रूकुटिः ३ भृकुटिः ४ एते मतान्तराश्रयेण स्त्रीलिङ्गाः। (२) पक्ष्मन् पुंसि क्लीबे च पक्ष्मा पक्ष्माणौ पक्ष्माणः। पक्ष्म पक्ष्मणी पक्ष्माणि। इत्यादि। (३) बृहस्पतिस्तु "नक्रो नासा विकूणिके" इति पुंस्याह।(४)औणादिक क्कनिप्प्रत्ययान्तः सृक्कः सृक्कणीति क्लीबे द्विवचनान्तम्। सृजति लालामिति सृक्कि इत्यपि। (५) हनुः पुंसि क्लीबे कूर्चं पुंसि क्लीबे च।

(१) रदना दशना दन्ता दंशखादनमल्लकाः ।
राजदन्तौ तु मध्यस्थावुपरि (२) श्रेणिकौ क्वचित् ॥ २४८ ॥
रसज्ञा रसना जिह्वा लोला तालु तु काकुदम् ।
सुधास्रवा घण्टिका च लम्बिका गलगण्डिका ॥ २४९ ॥
कन्धरा धमनिर्ग्रीवा शिरोधिश्च शिरोधरा ।
सा (३) त्रिरेखा कम्बुग्रीवाऽवटुर्घाटा कृकाटिका ॥ २५० ॥
कृकस्तु कन्धरामध्यं कृकपार्श्वे तु (४) वीतनौ ।
ग्रीवाधमन्यौ प्राग् (५) नीले पश्चान्मन्ये कलम्बिके ॥ २५१ ॥
गलो निगरणः कण्ठः काकलकस्तु तन्मणिः ।
(६) अंसो भुजशिरः स्कन्धो (७) जत्रुसन्धिरुरोऽसगः ॥ २५२ ॥

---

(१) रदना इति स्त्रीलिङ्गे क्लीबे च । (२) क्वचिन्मतान्तरे दन्तपङ्क्तेरुपरि यौ दन्तौ तौ श्रेणिकावित्युच्येते । (३) "रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते" इति हलायुधः । अवटुः स्त्रियां पुंसि च । (४) कृकस्य ग्रीवामध्यस्य पार्श्वे निकटौ वीतनौ उच्येते इत्यन्वयः । (५) ग्रीवायाः प्राग् पूर्वभागे धमन्यौ नीले उच्येते नीले इति प्रथमाद्विवचनं । (६) अंसः पुंसि क्लीबे च । (७) जत्रु जत्रुणी जत्रूणि इत्यादिरूपं क्लीबे ।

(१)भुजो बाहुः प्रवेष्टो (२)दोर्वाहार्थं भुजकोटरः ।
दोर्मूलं खण्डिकः कक्षा पार्श्वं स्यादेतयोरधः ॥ २५३ ॥
कफोणिस्तु भुजामध्यं (३)कफणिः कूर्परश्च सः ।
अधस्तस्या मणिबन्धात् स्यात् प्रकोष्ठः कलाचिका २५४
प्रगण्डः कूर्परांसान्तः पञ्चशाखः शयः शमः ।
हस्तः पाणिः करोऽस्यादौ मणिबन्धो मणिश्च सः ॥२५५॥
करभोऽस्मादाकनिष्ठं करशाखाङ्गुली समे ।
अङ्गुरी चाङ्गुलोऽङ्गुष्ठस्तर्जनी तु प्रदेशिनी ॥ २५६ ॥
ज्येष्ठा तु मध्यमा मध्या सावित्री स्यादनामिका ।
कनीनिका तु कनिष्ठाऽवहस्तो हस्तपृष्ठतः ॥ २५७ ॥
कामाङ्कुशो महाराजः करजो नखरो नखः ।
करशूको भुजाकण्ठः पुनर्भवपुनर्नवौ ॥ २५८ ॥
प्रदेशिन्यादिभिः सार्द्धमङ्गुष्ठे वितते सति ।

---

(१) भुजः पुंसि स्त्रियां च स्त्रियां भुजावन्तः । ( २ ) दोः पुंसि क्लीबे च दो. दोषौ दोषः इति दो. दोषी दोंषि इति क्लीबे दोषा इत्यावन्तोऽपि स्त्रिया। बाहा आबन्तः । कक्षा पुंसि क्लीबे च । ( ३ ) कफणिः पुंस्यपि । ( ४ ) हस्तपृष्ठतः हस्तपृष्ठे इत्यर्थे सप्तम्यर्थे तसुप्रत्ययः ।

प्रादेशतालगोकर्णवितस्तयो यथाक्रमम् ॥ २५९ ॥
प्रसारिताङ्गुलौ पाणौ [1]चपेटः प्रतलस्तलः ।
प्रहस्तस्तालिका तालः सिंहतलस्तु तौ युतौ ॥ २६० ॥
सम्पिण्डिताङ्गुलिः पाणिर्मुष्टिर्मुस्तुर्मुचुट्यपि ।
सङ्ग्राहश्चार्द्धमुष्टिस्तु खटकः कुब्जितः पुनः ॥ २६१ ॥
पाणिः प्रसृतः प्रसृतिस्तौ युतौ पुनर[3]ञ्जलिः ।
प्रसृते तु [4]द्रवाधारे गण्डूषश्चलुकश्चलुः ॥ २६२ ॥
[5]हस्तः प्रामाणिको मध्ये मध्यमाङ्गुलिकूर्प्परम् ।
बद्धमुष्टिरसौ [6]रत्निररत्निर्निष्कनिष्ठिकः ॥ २६३ ॥
व्यामन्यायामन्यग्रोधास्तिर्य्यग्बाहू प्रसारितौ ।

---

( १ ) चपेटः पुंसि स्त्रियां चपेटा क्वचित् चपटोऽपि यदाह" चपेटचपटौ तले" इत्युज्ज्वलदत्तः। सिंहो हि संहताभ्यां चपेटाभ्यां हंति अत. सिहतलः। ( २ ) मुष्टिः पुंसि स्त्रियां च । मुस्तुः पुंसि स्त्रियां । ( ३ ) अञ्जलिः पुंसि प्रणामार्थं मुकुलितहस्तयुग्मेऽपि प्रसिद्धः । यथा कुमारसंभवे " शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा " इति । ( ४ ) द्रवद्रव्याणां धारणयोग्यप्रसृतपाणौ गण्डूषादित्रयं । ( ५ ) मध्यमाङ्गुलिकूर्परयोर्मध्ये प्रामाणिको हस्तो भवति । ( ६ ) रत्निः पुंसि स्त्रियां च । अरत्निः पुंसि क्लीबे च ।

(१) ऊर्ध्वीकृतभुजा पाणिनरमानं तु पौरुषम् ॥ २६४ ॥
(२) दघ्नद्वयसमात्रास्तु जान्वादेस्तत्तदुन्मिते ।
रीटकः पृष्ठवंशः स्यात् पृष्ठं तु चरमं तनोः ॥ २६५ ॥
पूर्वभाग उपस्थोऽङ्कः क्रोडं(३) उत्सङ्ग इत्यपि ।
क्रोडोरो हृदयस्थानं वक्षो वत्सो भुजान्तरम् ॥ २६६ ॥
स्तनान्तरं हृद् हृदयं स्तनौ कुचौ पयोधरौ ।
उरोजौ च चूचुकन्तु (४) स्तनावृन्त-शिखा-मुखाः ॥ २६७ ॥
तुन्दं तुन्दिर्गर्भकुक्षी पिचण्डो जठरोदरे ।
कालखण्डं कालखञ्जं कालेयं कालकं (५) यकृत् ॥ २६८ ॥
दक्षिणे तिलकं क्लोम(६) वामे तु रक्तफेनजः ।

---

( १ ) भुजशब्दस्य पुंस्त्रीलिङ्गत्वात् अत्र स्त्रीलिङ्गान्तेन भुजाशब्देन पाणिशब्देन सह द्वन्द्वः भुजा च पाणिश्च भुजापाणी ऊर्ध्वीकृतौभुजापाणी येन सचासौ नरो मानं यस्य तत् इति विग्रहः । ( २ ) दघ्नादयस्त्रयः शब्दाः प्रत्यया अपि जान्वादेः परतो योजिताः सन्तः तेन जान्वादिना उन्मितं तत्तदुन्मितं तस्मिन् तत्तदुन्मिते जान्वाद्युन्मिते वर्त्तेत इत्यर्थः । ( ३ ) क्रोडं क्रोडापि- क्वचित् । ( ४ ) स्तनवृन्तम् २ स्तनशिखा ३ स्तनमुखः ४ । ( ५ ) यकृत् यकृती यकृन्ति शसादौ यकानि यकृन्ति इत्यादिरूपं । ( ६ ) क्लोम्नी क्लोमनी क्लोमानि इति रूपाणि । क्लोमः स्वरांतोऽपि । स्वरांतः पुंसि ।

पुष्पसः स्यादथ प्लीहा(१) गुल्मोऽन्त्रं तु पुरीतति(२) ॥ २६९ ॥
रोमावली रोमलता नाभिः स्यात्तुन्दकूपिका ।
नाभेरधो मूत्रपुटं बस्तिर्मूत्राशयोऽपि च ॥ २७० ॥
मध्योऽवलग्नं विलग्नं मध्यमोऽथ कटः कटिः ।
श्रोणिः कलत्रं कटीरं काञ्चीपदं ककुद्मती ॥ २७१ ॥
नितम्बारोहौ स्त्रीकट्याः पश्चाज्जघनमग्रतः ।
त्रिकं वंशाधस्तत्पार्श्वकूपकौ तु कुकुन्दरे(३) ॥ २७२ ॥
पुतौ स्फिजौ(४) कटिप्रोथौ वराङ्गं(५) तु च्युतिर्बुलिः ।
भगोऽपत्यपथो योनिः स्मरान्(६)मन्दिर-कूपिके ॥ २७३ ॥
स्त्रीचिह्नमथ पुंश्चिह्नं मेहनं शेपशेपसी ।
शिश्नं मेढ्रः कामलता लिङ्गं च द्वयमप्यदः ॥ २७४ ॥

---

(१) प्लीहानौ प्लीहान इत्यादि । (२) पुरीतत् पुरीतती पुरीतन्ति क्लीबे । वाचस्पतिस्तु " अन्त्रं पुरीतदस्त्रियामिति पुंस्यप्याह । (३) कुकुन्दरं क्लीबे भागुरिस्तु कुकुन्दरौ समाधश्चेऽज्जनो जघनकूपिका " इति पुंस्यप्याह । ( ४ ) स्फिक् स्त्रियां स्फिजौ स्फिजः । ( ५ ) उक्तं सामुद्रिकशास्त्रे " कूर्मपृष्ठ १ गजस्कंध २ समरोमा ३ ल्पनासिका ४ । विस्तीर्णाः ५ पद्मपत्राभाः ६ षडेते सुभगा मताः " । अल्पा नासिका गुह्यमध्यं यस्य सः अल्पनासिकः । ( ६ ) स्मरमंदिरं ७ स्मरकूपिका ८ ।

गुह्यंप्रजननोपस्थौ गुह्यमध्यं गुलो मणिः ।
सीवनी तदधः सूत्रं स्यादण्डं पेलमण्डकः ॥ २७५ ॥
मुष्कोऽण्डकोशो वृषणोऽपानं पायुर्गुदं च्युतिः ।
अधोमर्म्म शकृद्द्वारं त्रिवलीकंबुली अपि ॥ २७६ ॥
विटपं तु महावीज्यमन्तरा मुष्कवङ्क्षणम् ।
ऊरुसन्धिर्वङ्क्षणः स्यात् सक्थ्यूरुस्तस्य पर्व्व तु ॥२७७॥
जानुर्नलकीलोऽष्ठीवान् पश्चाद्भागोऽस्य मन्दिरः ।
कपोली त्वग्रिमो जङ्घा प्रसृता नलकिन्यपि ॥ २७८ ॥
प्रतिजङ्घा त्वग्रजङ्घा पिण्डिका तु पिचण्डिका ।
गुल्फस्तु चरणग्रन्थिर्घुटिको घुण्टको घुटः ॥ २७९ ॥
चरणः क्रमणः पादः पदोऽङ्घ्रिश्चलनः क्रमः ।
पादमूलं गोहिलरं स्यात्पार्ष्णिस्तु घुटयोरधः ॥ २८० ॥
पादाग्रं प्रपदं क्षिप्रं त्वङ्गुष्ठाङ्गुलिमध्यतः ।

---

(१) उपस्थः क्लीबेऽपि "उक्तं द्वयमुपस्थोऽस्त्री" इति वैजयन्ती। (२) मुष्कवङ्क्षणमिह क्लीबं द्वितीयैकवचनं तदाह वाग्भटः "मुष्कवङ्क्षणयोर्मध्ये विटपं षंटतारकम्" इति (३) पद् पाद् पादौ पादः इत्यादि "पत् पादंघ्रिश्चरणोऽस्त्री" इति व्याडिः। (४) अंगुष्ठश्च अंगुलयश्च अंगुष्ठांगुलयः तासां मध्यं तस्मिन् अत्र सप्तम्यर्थे तसुः।

कूर्चं क्षिप्रस्योपर्य्यङ्घ्रिस्कन्धः कूर्चशिरः समे ॥ २८१ ॥
तलहृदयं तु तलं मध्ये पादतलस्य तत् ।
तिलकः कालकः पिप्लुर्जतुल[1]स्तिलकालकः ॥ २८२ ॥

रसासृग्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्तैव दश वैकेषां रोमत्वक्स्नायुभिः सह ॥ २८३ ॥
रस आहारतेजोऽग्निसम्भवः षड्रसासवः ॥
आत्रेयोऽसृक्करो धातुर्घन[2]-मूल-महा-परः ॥ २८४ ॥
रक्तं रुधिरमाग्नेयं विस्रं तेजो भवे रसात्[3] ।
शोणितं लोहितमसृग्[4] वाशिष्ठं प्राणदासुरे ॥ २८५ ॥
क्षतजं मांसकार्यस्रं मांसं पललजङ्गले ।
रक्तात्[5]तेजो भवे क्रव्यं काश्यपं तरसामिषे ॥ २८६ ॥
मेदस्कृत्[6] पिशितं कीनं पलं पेश्य[7]स्तु तल्लताः ।

---

(१) जतुन इति क्वचित् पाठः तिलकालोऽपि । (२) घनधातुः मूलधातुः महाधातुरिति । (३) रसतेजः ९ रसभवं ६ । (४) असृक् असृग् असृजी असृञ्जि शसादौ असन् इत्यादेशे असानि असृञ्जि असृजा अस्ना इत्यादि रूपाणि । (५) रक्ततेजः ४ रक्तभवं ५ । (६) मेदस्कृती मेदस्कृन्ति । (७) पेशिरपि मतिवद्रूपं ।

[(१)] वुक्को हृद् हृदयं [(२)] वृक्कौ सुरसं च तदग्रिमम् ॥ २८७ ॥
शुष्कं वल्लूरमुत्तप्तं पूयदूष्ये पुनः समे ।
[(३)] मेदोऽस्थिकृत् वपा [(४)] मांसात्तेजोजे गौतमं वसा ॥ २८८ ॥
गोदं तु मस्तकस्नेहो मतिष्को मस्तुलुङ्गकः ।
अस्थि कुल्यं भारद्वाजं मेदस्तेजश्च मज्जकृत् ॥ २८९ ॥
मांसपित्तं श्वदयितं कर्करो देहधारकम् ।
मेदोजं कीकसं सारं [(५)] करोटिः शिरसोऽस्थनि ॥ २९० ॥
कपाल[(६)]कर्प्परौ तुल्यौ पृष्ठस्यास्थि कशेरुका ।
[(७)] शाखास्थनि स्यान्नलकं पार्श्वास्थि वङ्क्रिपर्शुके ॥ २९१ ॥
शरीरास्थि करङ्कः स्यात् कङ्कालमस्थिपञ्जरः ।

---

( १ ) वुक्कानौ वुक्कानः माग़ुरिमतेऽकारांतः क्लीबेऽपि वुक्कं स्त्रियामाबन्तोपि गौडमते । (२) वृक्का स्त्रियामाबन्तः "वृक्कौ पार्श्वगतौ गुलौ" इति वैजयंतीकारः पुंस्याह । ( ३ ) मेदः क्लीबे मेदसी मेदांसि इति रूपं । (४) मांसतेजः ४ मांसजं ५ । (५) करोटिः स्त्रियाम् । ( ६ ) कूर्पर इत्यपि यन्महेश्वर आह "कूर्परो जानुनि प्रोक्तः कपालेऽपि च कूर्परः" इति "खर्परस्तस्करे धूर्त्ते भिक्षुपात्रकपालयोः" इति खर्परोऽप्याह महेश्वरः । ( ७ ) शाखाशब्दोऽत्र भुजापर्यायः यदाह श्रीधरः "शाखा स्यात् पल्लवे वेदविभागेऽप्यन्तिके भुजे" इति ।

(१) मज्जा तु कौशिकः शुक्रकरोऽस्थः स्नेहसम्भवौ ॥ २९२ ॥
शुक्रं रेतो बलं बीजं वीर्य्यं मज्जासमुद्भवम् ।
आनन्दप्रभवं पुंस्त्वमिन्द्रियं त्विहवर्ज्जितम् ॥ २९३ ॥
पौरुषं प्रधानधातुर्लोम रोम तनूरुहम् ।
त्वक् छविश्छादनी कृत्तिश्चर्माजिनमसृग्धरा ॥ २९४ ॥
वस्नसा तु स्नसा स्नायुर्नाड्यो धमनयः सिराः ।
कण्डरा तु महास्नायुर्मलं (२) किट्टं तदक्षिजम् ॥ २९५ ॥
दूषीका दूषिका जैभं कुलुकं पिप्पिका पुनः ।
दन्त्यं कार्णं तु पिञ्जूषः शिङ्घाणो घ्राणसम्भवः ॥ २९६ ॥
सृणीका स्यन्दिनी लालाऽस्यासवः कफकूर्चिका ।
मूत्रं बस्तिमलं मेहः प्रस्रावो नृजलं स्रवः ॥ २९७ ॥
पुष्पिका तु लिङ्गमलं (३) विड् विष्ठाऽवस्करः शकृत् ।

---

(१) मज्जानौ मज्जानः वाचस्पतिस्तु "मज्जाद्वयो" रिति स्त्रियामप्याह मज्जा आबन्तः स्त्रीलिङ्गः । (२) "किट्टं मलोऽस्त्रियामित्यमरः । (३) विट् स्त्रियां, विशौ विशः वैजयंतीकारस्तु "उच्चारो विट् नवा" इति क्लीबेऽप्याह तदा विशी वींशि । "विष्ठाविषौ स्त्रियाम्" इत्यमरः विट् विषौ । शकृती शकृन्ति शसादौ शकान्नादेशे शकानि शक्ना शकृता इत्यादि ।

गूथं पुरीषं शमलोच्चारौ वर्च्चस्कवर्च्चसी ॥ २९८ ॥
वेषो नेपथ्यमाकल्पः परिकर्म्माङ्गसंस्क्रिया ।
उद्वर्त्तनमुत्सादन[1]मङ्गरागो विलेपनम् ॥ २९९ ॥
चार्च्चिक्यं समालभनं चर्च्चा स्यान्मण्डनं पुनः ।
प्रसाधनं प्रतिकर्म्म मार्ष्टिः[2] स्यान्मार्ज्जना मृजा ॥ ३०० ॥
वासयोगस्तु चूर्णं स्यात् पिष्टातः पटवासकः[3] ।
गन्धमाल्यादिना यस्तु संस्कारः सोऽधिवासनम् ॥ ३०१ ॥
निर्वेशो उपभोगोऽथ स्नानं सवनमाप्लवः ।
कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥ ३०२ ॥
स्याद्यक्षकर्द्दमो मिश्रैर्वर्त्तिर्गात्रानुलेपनी ।
चन्दनागरुकस्तूरीकुङ्कुमैस्तु चतुःसमं ॥ ३०३ ॥
अगुर्वगरुराजार्हं लोहं कृमिजवंशिके ।
अनार्य्यजं जोङ्गकं च मङ्गल्या मल्लिगन्धि यत् ॥ ३०४ ॥
कालागरुः काकतुण्डः श्रीखण्डं रोहणद्रुमः ।

---

( १ ) उच्छादनमिति पाठः उच्छाद्यते मलोऽनेनेति छद अपवारणे धातुः । ( २ ) मार्ष्टिः स्त्रियां मार्ज्जनं क्लीबेऽप्यन्ये मृजास्त्रियाम् । ( ३ ) येन कुंकुमादिना पटो वास्यते सः ।

गन्धसारो मलयजश्चन्दने हरिचन्दने ॥ ३०५ ॥
तैलपर्णिकगोशीर्षौ पत्राङ्गं रक्तचन्दनम् ।
कुचन्दनं ताम्रसारं रञ्जनं तिलपर्णिका ॥ ३०६ ॥
जातिकोशं जातिफलं कर्पूरो हिमवालुका ।
घनसारः सिताभ्रश्च चन्द्रोऽथ मृगनाभिजा ॥ ३०७ ॥
मृगनाभिर्मृगमदः कस्तूरी गन्धधूल्यपि ।
काश्मीरजन्म घुसृणं वर्णं लोहितचन्दनम् ॥ ३०८ ॥
वाह्लीकं कुङ्कुमं वह्निशिखं कालेयजागुडे ।
सङ्कोचपिशुनं रक्तं धीरं पीतनदीपने ॥ ३०९ ॥
लवङ्गं देवकुसुमं श्रीसंज्ञमथ कोलकम् ।
कक्कोलकं कोशफलं कालीयकं तु (१)जापकम् ॥ ३१० ॥
यज्ञधूपो बहुरूपः सालवेष्टोऽग्निवल्लभः ।
सर्जमणिः सर्जरसः सालः सर्वरसोऽपि च ॥ ३११ ॥
(२)धूपो वृकात् कृत्रिमाच्च तुरुष्कः सिह्लपिण्डकौ ।
पायसस्तु वृक्षधूपः श्रीवासः सरलद्रवः ॥ ३१२ ॥

---

(१) जायकम् इति वा पाठः । (२) वृकधूपः १ कृत्रिमधूपः २ ।

स्थानात् स्थानान्तरं गच्छन्धूपो गन्धपिशाचिका ।
स्थासकस्तु हस्तबिम्बमलङ्कारस्तु भूषणम् ॥ ३१३ ॥
परिष्कारोऽऽभरणे च चूडामणिः शिरोमणिः ।
नायकस्तरलो हारान्तर्मणिर्मुकुटं पुनः ॥ ३१४ ॥
मौलिः किरीटं कोटीरमुष्णीषं पुष्पदाम तु ।
मूर्ध्नि माल्यं माला स्रक् च गर्भकः केशमध्यगम् ॥३१५॥
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ।
तिर्यक् वक्षसि वैकक्षं प्रालम्बमृजुलम्बि यत् ॥ ३१६ ॥
सन्दर्भो रचना गुम्फः श्रन्थनं ग्रन्थनं समाः ।
तिलके तमालपत्रचित्रपुण्ड्रविशेषकाः ॥ ३१७ ॥
आपीडशेखरोत्तंसावतंसाः शिरसः स्रजि ।
उत्तरौ कर्णपूरेऽपि (1) पत्रलेखा तु पत्रतः ॥ ३१८ ॥
(2) भङ्गिवल्लिलताङ्गुल्यः पत्रपाश्यां ललाटिका ।

---

(१) कर्णपूरः पुष्पकृतकर्णाभरणमसौ उत्तरस्थाविति उत्तंसावतंसौ । यद्धलायुध. "कर्णपूरेऽपि दृश्येते तथोत्तंसावतंसकौ" इति वतंसोऽपि
(२) पत्रभंगिः २ पत्रवल्लिः ३ पत्रलता ४ पत्रांगुली ५ स्त्रीणां कपो-

वालपाश्या[1] पारितथ्या[2] कर्णिका[1] कर्णभूषणम् ॥ ३१९ ॥
ताटङ्कस्तु[1] ताडपत्रं[2] कुण्डलं[3] कर्णवेष्टकः[4] ।
उत्क्षिप्तिका[1] तु कर्णान्दु[2]र्बालिका[1] कर्णपृष्ठगा ॥ ३२० ॥
ग्रैवेयकं[1] कण्ठभूषा लम्बमाना ललन्तिका[1] ।
प्रालम्बिका[1] कृता हेम्नोरःसूत्रिका तु मौक्तिकैः ॥ ३२१ ॥
हारो[1] मुक्ता[(1)]तः प्रालम्ब[2]स्रक्[3] कलापा[4]वली[5] लता[6] ।
देवच्छन्दः[1] शतं साष्टं त्विन्द्रच्छन्दः[1] सहस्रकम् ॥३२२॥
तदर्द्धं विजयच्छन्दो[1] हार[1]स्त्वष्टोत्तरं शतम् ।
अर्द्धं रश्मिकलापो[1]ऽस्य द्वादश त्वर्द्धमाणवः[1] ॥ ३२३ ॥
द्विर्द्वादशार्द्धगुच्छः[1] स्यात् पञ्च हारफलं[1] लताः ।
अर्द्धहारश्च[1]तुःषष्टिर्गुच्छ[1]माणवमन्दराः[1] ॥ ३२४ ॥
अपि गोस्तनगोपुच्छा[1]वर्द्धमर्द्धं यथोत्तरम् ।
इति हारा यष्टिभेदादेकावल्ये[1]कयष्टिका[2] ॥ ३२५ ॥

---

लादिषु कस्तूरिकादिभिर्यद्रचनं तस्य वाचका एते शब्दाः एवं पत्रवल्लरी पत्रमंजरीत्यादयोऽपि ज्ञेयाः । यद्धलायुधः "भुजशिखरस्तनमंडलकपोलकण्ठेषु विरचिताः कुशलैः । अनुलेपनेन लेखा निगद्यते पत्रवल्लीति" । (१) मुक्ताप्रालंबः २ मुक्तास्रक् ३ मुक्ताकलापः ४ मुक्तावली ५ मुक्तालता ६ ।

कण्ठिका[३]ऽप्यथ नक्षत्रमाला[१] तत्सङ्ख्यमौक्तिकैः ।
केयूर[१]मङ्गदं[२] बाहुभूषा[३]ऽथ करभूषणम्[१] ॥ ३२६ ॥
कटको[२] वलयं[३] पारिहार्य्या[४]वापौ[५] च कङ्कणम्[६] ।
हस्तसूत्रं[७] प्रतिसरं ऊर्म्मिका[१] त्वङ्गुलीयकम्[२] ॥ ३२७ ॥
सा साक्षराङ्गुलिमुद्रा[१] कटिसूत्रं[१] तु मेखला[२] ।
कलापो[३] रसना[४] सारसनं[५] काञ्ची[६] च सप्तकी[७] ॥३२८॥
सा शृङ्खलं[१] पुंस्कटिस्था किङ्किणी[१] क्षुद्रघण्टिका[२] ।
नूपुरं[१] तु तुलाकोटिः[२] पाद(१)तः कटका[३]ङ्गदे[४] ॥ ३२९ ॥
मञ्जीरं[५] हंसकं[६] शिञ्जि(२)न्य[७]ंशुकं[१] वस्त्र[२]मम्बरम्[३] ।
सिचयो[४] वमनं[५] चीरा[६]च्छादौ[७] सिक्(३) चेल[९]वाससी[१०] ॥ ३३० ॥
पटः[११] प्रोतो[१२]ऽञ्चलो[१]ऽस्यान्तो वर्त्ति[१]र्वस्ति[२]श्च तद्(४)दशाः ।
पत्रोर्णं[१] धौतकौशेय[२]मुष्णीषो[१] मूर्द्धवेष्टनम्[२] ॥ ३३१ ॥
तत् स्यादुद्गमनीयं[१] यद्धौतयोर्वस्त्रयोर्युगम् ।

---

(१) पादकटकः ३ पादाङ्गदः ४ । (२) शिञ्जिनी स्त्रियां । (३) सिक् स्त्रियां सिचौ सिचः । (४) दशाः पुंसि स्त्रियां च बहुवचनान्तः "स्त्रिया बहुत्वे वस्त्रस्य इति केचित् ।"

त्वक्फलकृमिरोमभ्यः सम्भवात्तच्चतुर्विधम् ॥ ३३२ ॥
(१)क्षौम[1]कार्प्पास[2]कौशेय[3]राङ्कवादिविभेदतः ।
क्षौमं[1] दुकूलं[2] दुगूलं[3] स्यात्कार्पासं तु बादरम्[2] ॥ ३३३ ॥
(२)कौशेयं[1] कृमिकोशोत्थं राङ्कवं[1] मृगरोमजम् ।
(३)कम्बलः[1] पुनरुर्णायु[2]राविकौर[3]भ्ररल्लकाः[5] ॥ ३३४ ॥
नवं वासोऽनाहतं[1] स्यात्तन्त्रकं[2] निष्प्रवाणि[3] च ।
प्रच्छादनं[1] प्रावरणं[2] संव्यानं[3] चोत्तरीयकम्[4] ॥ ३३५ ॥
वैकक्षे[1] प्रावारो[2]त्तरासङ्गौ[3] बृहतिकाऽपि च ।
वराशिः[1] स्थूलशाटः[2] स्यात् परिधानं[1] त्वधोंशुकम्[2] ॥ ३३६ ॥
अन्तरीयं[3] निवसन[4]मुपसंव्यानमित्यपि ।
तद्ग्रन्थिरुच्चयो[1] नीवी[2] वरस्त्र्यर्द्धोरुकांशुकम् ॥ ३३७ ॥
चण्डान्तकं[1] चलनकश्चलानी[1] त्वितरस्त्रियाः ।

---

(१) "वाल्कं क्षौमादी"त्यमरः । क्षुमाऽतसी तस्यास्त्वग्भ्यो जातं आदिशब्दात् भाङ्गादीति क्षीरस्वामी भाङ्गं शणनिष्पन्नं शाणं । क्षौमदुकूलशब्दौ सूक्ष्मवस्त्रनाम्नी अपि । (२) पट्टोऽपि कौशेयवाची पट्टशब्दस्य पुंस्त्वमुक्तमिति लिङ्गानुशासनटीका । (३) कम्बलः पुंसि स्त्रियां च कम्बली नदीवत् ।

चोलः[1] कञ्चुलिका[2] कूर्पासको[3]ऽङ्गिका[4] च कञ्चुके[5] ॥३३८॥
शाटी[1] चोट्य[2]थ नीशारो[1] हिमवातापहांशुके ।
कच्छा[1] कच्छाटिका(1)[2] कक्षा[3] परिधानापराञ्चले ॥ ३३९ ॥
कच्छापटस्तु[1] कौपीनं[2] समौ नक्तक[1]कर्पटौ[2] ।
निचोलः[1] प्रच्छदपटो[2] निचुलश्चो[3]त्तरच्छदः[4] ॥ ३४० ॥
उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत् पूर्णपात्रं[1] पूर्णानकं[2] च तत् ॥ ३४१ ॥
तत्स्यादाप्रपदीनं[1] तु व्याप्नोत्याप्रपदं हि यत् ।
चीवरं[1] भिक्षुसङ्घाटी[2] जीर्णवस्त्रं[1] पटच्चरम्[2] ॥ ३४२ ॥
शाणी[1] गोणी[2] छिद्रवस्त्रे जलार्द्रा[1] क्लिन्नवाससि ।
पर्यस्तिका[1] परिकरः[2] पर्यङ्कश्चा[3]वसक्थिका[4] ॥ ३४३ ॥
कुथे[1] वर्णः[2] परिस्तोमः[3] प्रवेणी[4] नवतो[5]ऽस्तराः[6] ।
अपटी[1] काण्डपटः[2] स्यात् प्रतिसीरा[1] जवन्य(2)[2]पि ॥ ३४४ ॥
तिरस्करिण्य[3]थोल्लोचो[1] वितानं[2] कदकोऽपि[3] च ।
चन्द्रोदये[4] स्थुलं[1] दूष्ये[2] केणिका[1] पटकुट्य[2]पि ॥ ३४५ ॥

---

(१) कच्छोटिका इति वा पाठः (२) यवनिकापि क्वचित् ।

गुणालयनिकायां स्यात् संस्तरस्स्रस्तरौ समौ ।
तल्पं शय्या शयनीयं शयनं (१) तलिमं च तत् ॥ ३४६ ॥
मञ्चमञ्चकपर्य्यङ्कपल्यङ्काः खट्वया समाः ।
उच्छीर्षकमु(२)पोद्धानं बर्हौ पाले पतद्ग्रहः ॥ ३४७ ॥
प्रतिग्राहो मु(३)कुरात्मदर्शादर्शास्तु दर्पणे ।
स्याद्वेत्रासनमा(४)सन्दी विष्टरः पीठमासनम् ॥ ३४८ ॥
कशिपुर्भोजनाच्छादावौशीरं शयनासने ।
लाक्षा द्रुमामयो राक्षा रङ्गमाता पलङ्कषा ॥ ३४९ ॥
जतु क्षतघ्ना कृमिजा यावालक्तौ तु तद्रसः ।
अञ्जनं कज्जलं दीपः प्रदीपः कज्जलध्वजः ॥ ३५० ॥
स्नेहप्रियो गृहमणिर्दशाकर्षो दशेन्धनः ।
व्यजनं तालवृन्तं तत् धवित्रं मृगचर्म्मणः ॥ ३५१ ॥
आलावर्त्तं तु वस्त्रस्य कङ्कतिः केशमार्ज्जनः ।

---

(१) तल्लिनं इति वा पाठः । (२) उपधानं २ उपबर्हं ४ । (३) मकुरोऽपि । (४) आसन्दी स्त्रियां पुंसि च इति हलायुधटीका ।

प्रसाधनै[3]श्चाथ बालक्रीडनके[1] गुडो[2] गिरिः[3] ॥ ३५२ ॥
गिरियको[4] गिरिगुडः[5] समौ कन्दुक[1]गेन्दुकौ[2] ।
राजा[1] राट्[2] पृथिवीशक्र[3]मध्यलोकेश[4]भूभृतः[5] ॥ ३५३ ॥
महीक्षित्[6] पार्थिवो[7] मूर्द्धाभिषिक्तो[8] भू[(1)]-प्रजा-नृ-पः[11] ।
मध्यमो[(2)][1] मण्डलाधीशः[2] सम्राट्[1] तु शास्ति यो नृपान् ॥ ३५४ ॥
यः सर्वमण्डलस्येशो राज[(3)]सूयं च योऽयजत् ।
चक्रवर्त्ती[1] सार्वभौम[2]स्ते तु[(4)] द्वादश भारते ॥ ३५५ ॥
आर्षभि[1]र्भरत[2]स्तत्र सगर[1]स्तु सुमित्रभूः[2] ।
मघवा[(5)][1] वैजयि[2]रथाश्वसेननृपनन्दनः[1] ॥ ३५६ ॥
सनत्कुमारो[2]ऽथ[(6)] शान्तिः[1] कुन्थु[1]ररो[1] जिना अपि ।
सभूम[1]स्तु कार्त्तवीर्यः[2] पद्मः[1] पद्मोत्तरात्मजः[2] ॥ ३५७ ॥
हरिषेणो[1] हरिसुतो[2] जयो[1] विजयनन्दनः[2] ।
ब्रह्मसूनु[1]र्ब्रह्मदत्तः[2] सर्वेपीक्ष्वाकुवंशजाः ॥ ३५८ ॥

---

(१) भूपः ९ प्रजाप. १० नृप. ११ यौगिकत्वात् भूपालः लोकपालः नरपाल इत्यादयो ज्ञेयाः । (२) अग्रेतनसम्राजपेक्षया सामान्यः । (३) राजसूयं यज्ञविशेषं । (४) तेत्विति आर्षभ्याद्या ब्रह्मदत्तपर्यंता द्वादश । (५) मघवानौ मघवान इति रूपं (६) जिनचक्रवर्त्तीनामेकैकम् ।

प्राजापत्यस्त्रिपृष्ठोऽथ (१) विपृष्ठो ब्रह्मसम्भवः ।
स्वयम्भूरुद्रतनयः सोमभूः पुरुषोत्तमः ॥ ३५९ ॥
शैवः पुरुषसिंहोऽथ महाशिरस्समुद्भवः ।
स्यात्पुरुषपुण्डरीको दत्तोऽग्निसिंहनन्दनः ॥ ३६० ॥
(२) नारायणो दाशरथिः कृष्णस्तु वसुदेवभूः ।
वासुदेवा अमी (३) कृष्णा नव शुक्ला (४) बलास्त्वमी ॥ ३६१ ॥
अचलो विजयो भद्रः सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी ॥३६२॥
(५) अश्वग्रीवस्तारकश्च मेरको मधुरेव च ।

---

(१) त्रयो वंश्या. पृष्ठे पश्चिमप्रदेशोऽस्य त्रिपृष्टः त्रिपृष्टादयस्त्वर्द्धचक्रवर्त्तिनः द्वौ वंशौ पृष्ठे पश्चिमप्रदेशोऽस्य द्विपृष्टः शाकपार्थिवादिः । (२) वत्येण वासुदे सर्वे नीलावलाहसुक्किलयेति एतेपा च वासुदेवनलदेवानां अष्टाना गोतमगोत्रं नारायणपद्मयोश्च काश्यपगोत्रं ज्ञेयं यद्रावश्यकसूत्रं बलदेववासुदेवा अट्ठेवयहुन्ति गोयमः सगुत्ता नारायणपोमापुणकासवगुत्ता मुणेयव्वा । (३) अमी पूर्वोक्ताः प्रजापत्याद्याः कृष्णान्तवासुदेवा उच्यन्ते कृष्णा वर्णेन श्यामा.। (४) अमी वक्ष्यमाणाः नवेत्यत्रापि संबध्यते बलमस्त्येपां शुक्लाः वर्णेन धवला.। (५) अमी वक्ष्यमाणा अश्वग्रीवादयो नव विष्णूनां प्राजापत्यादीनां वासुदेवाना यथाक्रमं द्विपः प्रतिपक्षाः ।

निशुम्भबलिप्रह्लादलङ्केशमगधेश्वराः ॥ ३६३ ॥
(१) जिनैः सह त्रिषष्टिः स्युः शलाकापुरुषा अमी ।
आदिराजः पृथुर्वैन्यो (२) मान्धाता युवनाश्वजः ॥ ३६४ ॥
धुन्धुमारः कुवलाश्वो हरिश्चन्द्रस्त्रिशङ्कुजः ।
(३) पुरूरवा बौध ऐल उर्वशीरमणश्च सः ॥ ३६५ ॥
दौष्यन्तिर्भरतः सर्वदमः शकुन्तलात्मजः ।
हैहयस्तु कार्त्तवीर्यो दोस्सहस्रभृदर्जुनः ॥ ३६६ ॥
कौशल्यानन्दनो दाशरथी रामोऽस्य तु प्रिया ।
वैदेही मैथिली सीता जानकी धरणीसुता ॥ ३६७ ॥
रामपुत्रौ कुशलवावेकयोक्त्या (४) कुशीलवौ ।
सौमित्रिर्लक्ष्मणो (५) वाली वालिरिन्द्रसुतश्च सः ॥ ३६८ ॥

---

(१) उपसंहारमाह जिनैरिति जिनैस्तीर्थंकरैः ऋषभादिभिश्चतुर्विंशत्या सह मीलिता अमी भरतादयो द्वादश चक्रवर्तिनः प्राजापत्यादयो नव वासुदेवाः अचलादयो नव बलदेवाः अश्वग्रीवाद्या नव प्रतिवासुदेवाश्चेति सर्वे मिलितास्त्रिषष्टिः स्युः ते च शलाकापुरुषाः पुरुषेषु जातिविशेषा इत्यर्थः । (२) मांधातृप्रमुखाः षट् लोके चक्रवर्तित्वेन प्रसिद्धाः । (३) पुरूरवाः पुरूरवसौ पुरूरवसः । (४) कुशीलवाविति राजदंतादित्वात्साधुः । (५) वाली इन्नंतः वालिः हरिवत् ।

आदित्यसूनुः[१] सुग्रीवो[२] हनुमान्[१] वज्रकण्टकः[२] ।
मारुतिः[३] केशरिसुतः[४] आञ्जनेयो[५]ऽर्जुनध्वजः[६] ॥ ३६९ ॥
पौलस्त्यो[१] रावणो[२] रक्षो[(१)३]-लङ्केशो[४] दशकन्धरः[५] ।
रावणिः[१] शक्रजि[२]न्मेघनादो[३] मन्दोदरीसुतः[४] ॥ ३७० ॥
अजातशत्रुः[१] शल्यारि[२]र्धर्मपुत्रो[३] युधिष्ठिरः[४] ।
कङ्को[५]ऽजमीढो[(२)६] भीमस्तु[१] मरुत्पुत्रो[२] वृकोदरः[३] ॥ ३७१ ॥
किर्मीर[(४)]-कीचक[५]-वृक[६]-हिडिम्बानां निसूदनः[७] ।
अर्जुनः[१] फाल्गुनः[२] पार्थः[३] सव्यसाची[(४)४] धनञ्जयः[५] ॥ ३७२ ॥
राधावेधी[(५)६] किरीटी[७]ऐन्द्रि[८]र्जिष्णुः[९] श्वेतहयो[१०] नरः[११] ।
बृहन्नटो[(६)११] गुडाकेशः[१३] समुद्रेशः[१४] कपिध्वजः[१५] ॥ ३७३ ॥

---

(१) रक्षईशः २ लकेशः ४ । (२) अजास्त्रिवार्षिका यवा मीढा भिक्ताः अनेन अजमीढः । आजमीढोऽपि यद्भागवतं " सेंद्राः श्रिता यद्नुभावितमाजमीढ " इति हे आजमीढ हे युधिष्ठिर इति तट्टीका । (३) किर्मीरनिषूदनः ४ कीचकनिषूदनः ५ बकनिषूदनः ६ हिडिम्बनिषूदनः ७ । (४) सव्यसाची दंडिवदिन्नंत. । (५) राधां वेध्यविशेषं विध्यतीति राधावेधी इन्नंतः । (६) बृहच्चासौ नटश्च बृहन्नटः विराटगृहे छद्मना नाट्याचार्योऽसावभूदिति प्रसिद्धिः ।

बीभत्सुः[16] कर्णजित्[17] तस्य गाण्डिवं[1] गाण्डीवं धनुः ।
पाञ्चाली[1] द्रौपदी[2] कृष्णा[3] सैरन्ध्री[4] नित्ययौवना[5] ॥ ३७४ ॥
वेदिजा[6] याज्ञसेनी[7] च कर्णश्[1]चम्पाधिपो[2]ऽङ्गराट्[3] ।
(१) राधा[4]-सूता[5]-र्कतनयः[6] कालपृष्ठं[1] तु तद्धनुः ॥ ३७५ ॥
श्रेणिकस्तु[1] भम्भासारो[2] (२) हालः[1] स्यात् सातवाहनः[2] ।
कुमारपालश्[1]चौलुक्यो[2] राजर्षिः[3] परमार्हतः[4] ॥ ३७६ ॥
मृलस्वमोक्ता[5] धर्मात्मा[6] मारिव्यसनवारकः[7] ।
राजबीजी[1] राजवंश्यो[2] बीज्य[1]वंश्यौ[2] तु वंशजे ॥ ३७७ ॥
(३) स्वाम्य[1]मात्यः[2] सुहृत्[3] कोशो[4] राष्ट्र[5]दुर्ग[6]बलानि[7] च ।
राज्याङ्गानि प्रकृतयः[1] पौराणां श्रेणयोऽपि च ॥ ३७८ ॥
तन्त्रं[1] स्वराष्ट्रचिन्ता स्यादावाप[1]स्त्वरिचिन्तनम् ।
परिस्पन्दः[1] परिकरः[2] परिवारः[3] परिग्रहः[4] ॥ ३७९ ॥

---

(१) राधातनयः ४ सूततनयः ५ अर्कतनयः ६ । (२) हलत्यरातिहृदयं हालः ज्वलादित्वोण्णः सातं दत्तं सुखं वाहनमस्य सातवाहनः सालराहन इत्यपि । (३) स्वामी प्रभुः अमात्यो मंत्री, सुहृद् मित्रं, कोशो भांडागारः, राष्ट्रं जनपदः, दुर्गं कोट्ट (गढ इति भाषायां) बलं सैन्यं । राज्याङ्गानामेकैकं ज्ञेयम् ।

परिच्छदः परिबर्हस्तन्त्रोपकरणे अपि ।
राजशय्या महाशय्या भद्रासनं नृपासनम् ॥ ३८० ॥
सिंहासनं तु तद्धैमं (१) छत्रमातपवारणम् ।
चामरं वालव्यजनं रोमगुच्छः प्रकीर्णकम् ॥ ३८१ ॥
स्थगी ताम्बूलकरङ्को भृङ्गारः कनकालुका ।
भद्रकुम्भः पूर्णकुम्भः पादपीठं पदासनम् ॥ ३८२ ॥
अमात्यः सचिवो मन्त्री धीसखः सामवायिकः ।
नियोगी कर्मसचिव आयुक्तो व्यापृतश्च सः ॥ ३८३ ॥
द्रष्टा तु व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः ।
महामात्राः प्रधानानि (२) पुरोधास्तु पुरोहितः ॥ ३८४ ॥
सौवस्तिकोऽथ द्वारस्थः क्षत्ता स्याद् द्वारपालकः ।
दौवारिकः प्रतीहारी वेत्र्युत्सारकदण्डिनः ॥ ३८५ ॥
रक्षिवर्गे (३) ऽनीकस्थः स्यादध्यक्षाधिकृतौ समौ ।
पौरोगवः सूदाध्यक्षः सूदस्त्वौदनिको गुणः ॥ ३८६ ॥

---

(१) हेम्नो विकारो हैमं। (२) प्रधानमजहत् क्लीबलिंगः॥ महामात्रः प्रधानं स्यादिति हलायुधः। (३) रक्षिवर्गे अङ्गरक्षकवर्गे राजशिक्षाविचक्षणवर्गे वा।

बीभत्सुः[15] कर्णजित्[16] तस्य गाण्डिवं[1] गाण्डीवं[2] धनुः ।
पाञ्चाली[1] द्रौपदी[2] कृष्णा[3] सैरन्ध्री[4] नित्ययौवना[5] ॥ ३७४ ॥
वेदिजा[6] याज्ञसेनी[7] च कर्णश्[1]चम्पाधिपो[2]ऽङ्गराट्[3] ।
राधा-[(१)4]सूता-[5]र्कतनयः[6] कालपृष्ठं[1] तु तद्धनुः ॥ ३७५ ॥
श्रेणिकस्तु[1] भम्भासारो[2] हालः[(२)1] स्यात् सातवाहनः[2] ।
कुमारपालश्[1]चौलुक्यो[2] राजर्षिः[3] परमार्हतः[4] ॥ ३७६ ॥
मृतस्वमोक्ता[5] धर्मात्मा[6] मारिव्यसनवारकः[7] ।
राजबीजी[1] राजवंश्यो[2] बीज्य[1]वंश्यौ[2] तु वंशजे ॥ ३७७ ॥
स्वाम्य[(३)1]मात्यः[2] सुहृत्[3] कोशो[4] राष्ट्र[5]दुर्ग[6]बलानि[7] च ।
राज्याङ्गानि प्रकृतयः[1] पौराणां श्रेणयोऽपि च ॥ ३७८ ॥
तन्त्रं[1] स्वराष्ट्रचिन्ता स्यादावापस्[1]त्वरिचिन्तनम् ।
परिस्पन्दः[1] परिकरः[2] परिवारः[3] परिग्रहः[4] ॥ ३७९ ॥

---

(१) राधातनयः ४ सूततनयः ५ अर्कतनयः ६ । (२) हलत्यरातिहृदयं हालः ज्वलादित्वोण्णः सातं दत्तं सुखं वाहनमस्य सातवाहनः सालराहन इत्यपि । (३) स्वामी प्रभुः अमात्यो मंत्री, सुहृद् मित्रं, कोशो भांडागारः, राष्ट्रं जनपदः, दुर्गं कोट्टः (गढ इति भाषायां) बलं सैन्यं । राज्याङ्गानामेकैकं ज्ञेयम् ।

परिच्छदः परिबर्हस्तन्त्रोपकरणे अपि ।
राजशय्या महाशय्या भद्रासनं नृपासनम् ॥ ३८० ॥
सिंहासनं तु तद्धैमं[1] छत्रमातपवारणम् ।
चामरं वालव्यजनं रोमगुच्छः प्रकीर्णकम् ॥ ३८१ ॥
स्थगी ताम्बूलकरङ्को भृङ्गारः कनकालुका ।
भद्रकुम्भः पूर्णकुम्भः पादपीठं पदासनम् ॥ ३८२ ॥
अमात्यः सचिवो मन्त्री धीसखः सामवायिकः ।
नियोगी कर्म्मसचिव आयुक्तो व्यापृतश्च सः ॥ ३८३ ॥
द्रष्टा तु व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः ।
महामात्राः प्रधानानि[2] पुरोधास्तु पुरोहितः ॥ ३८४ ॥
सौवस्तिकोऽथ द्वारस्थः क्षत्ता स्यात् द्वारपालकः ।
दौवारिकः प्रतीहारो वेत्र्युत्सारकदण्डिनः ॥ ३८५ ॥
रक्षिवर्गोऽ[3]नीकस्थः स्यादध्यक्षाधिकृतौ समौ ।
पौरोगवः सूदाध्यक्षः सूदस्त्वौदनिको गुणः ॥ ३८६ ॥

---

(१) हेम्नो विकारो हैमं। (२) प्रधानमजहत् क्लीबलिंगः॥ महामात्रः प्रधानं स्यादिति हलायुधः। (३) रक्षिवर्गे अङ्गरक्षकवर्गे राजशिक्षाविचक्षणवर्गे वा ।

भक्तकारः सूपकारः सूपारालिकवल्लवाः ।
भौरिकः कनकाध्यक्षो रूपाध्यक्षस्तु नैष्किकः ॥ ३८७ ॥
स्थानाध्यक्षः स्थानिकः स्यात् शुल्काध्यक्षस्तु शौल्किकः ।
शुल्कस्तु घट्टादिदेयं धर्म्माध्यक्षस्तु धार्मिकः ॥ ३८८ ॥
धर्म्माधिकरणी चाथ हट्टाध्यक्षोऽधिकर्म्मिकः ।
चतुरङ्गबलाध्यक्षः सेनानीर्दण्डनायकः ॥ ३८९ ॥
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।
स्यातामन्तःपुराध्यक्षेऽन्तर्वंशिकावरोधिकौ ॥ ३९० ॥
शुद्धान्तः स्यादन्तःपुरमवरोधोऽवरोधनम् ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ३९१ ॥
षण्ढे वर्षवरः शत्रौ प्रतिपक्षः परो रिपुः ।
शात्रवः प्रत्यवस्थाता प्रत्यनीकोऽभियार्यरी ॥ ३९२ ॥

---

(१) "स्व विचिंत्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया" इति रघु । शुल्कशब्दो विवाहाय वराद्ग्राह्यवस्तुवाच्यपि । यदाह अजयः । "शुल्को घट्टे विवाहाय वराद्ग्राह्ये च वस्तुनि" महेश्वरोऽपि "शुल्कं घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च" बंधको विवाहाय यद्ग्राह्यं धनमिति तट्टीका । घट्टादिदेयं शुल्कोऽस्त्री " इत्यमरोऽपि ।

दस्युः सपत्नोऽसहनो विपक्षो
द्वेषी द्विषन्[(१)] वैर्य्यहितो जिघांसुः ।
दुर्हृत् परः[(२)] पन्थकपन्थिनौ द्विट्
प्रत्यर्थ्यमित्रावभिमात्यराती ॥ ३९३ ॥

वैरं विरोधो विद्वेषो वयस्यः सवयाः[(३)] सुहृत्[(४)] ।
स्निग्धः सहचरो मित्रं सखा सख्यं तु सौहृदम् ॥३९४॥
सौहार्दं साप्तपदीनं मैत्र्यं[(५)] जर्य्याणि सङ्गतम् ।
आनन्दनं त्वाप्रच्छन्नं स्यात् सभाजनमित्यपि ॥ ३९५ ॥
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ।
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥ ३९६ ॥
अनुवृत्तिस्त्वनुरोधो हेरिको गूढपूरुषः ।
प्रणिधिर्यथार्हवर्णोऽवसर्पो मन्त्रविच्चरः ॥ ३९७ ॥
वार्त्तायनः स्पशश्चारः आप्तप्रत्ययितौ समौ ।

---

(१) द्विषन्तौ द्विषन्तः इति रूपं । (२) परिपंथकः परिपंथी परिपंथिनौ "पथुण् गतौ" चुरादिः णक्प्रत्ययः (३) सवयसौ सवयसः । (४) सुहृदौ सुहृदः । (५) मैत्री नदीवत् मैत्र्यं चेत् क्लीबे ।

(१) सत्रिणि स्याद्गृहपतिर्दूतः सन्देशहारकः ॥ ३९८ ॥
सन्धिविग्रहयानान्यासनद्वैधाश्रया अपि ।
षड्गुणाः शक्तयस्तिस्रः प्रभुत्वोत्साहमन्त्रजाः (२) ॥ ३९९ ॥
सामदानभेददण्डा उपायाः (३) साम सान्त्वनम् ।
उपजापः पुनर्भेदो दण्डः स्यात् साहसं दमः ॥ ४०० ॥
प्राभृतं ढौकनं लञ्चोत्कोचः कौशलिकामिषे ।
उपा(४)च्चारः प्रदानं दाहारौ ग्राह्यायने अपि ॥ ४०१ ॥
(५) मायोपेक्षेन्द्रजालानि क्षुद्रोपाया इमे त्रयः ।
(६) मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ॥ ४०२ ॥

---

(१) सत्रिणौ सत्रिणः । (२) कोशः भाण्डागारं दुर्गः दण्डसमृद्धिः सैन्यं इति प्रभुशक्तिः १ पराक्रमसंपत् उत्साहशक्तिः २ मंत्रः पञ्चाङ्गो विज्ञानसंपत् मंत्रशक्तिः ३ । (३) सामनी सामानि । (४) उपात् उपसर्गात् चार. उपचार. ७ उपप्रदानं ८ उपदा ९ उपहारः १० उपग्राह्या ११ उपायनम् (५) माया रूपपरावर्त्तनादिका, उपेक्षावधारणम्, इंद्रजालं मंत्रद्रव्यहस्तप्रयोगादिना असंभवद्वस्तुदर्शनम्, एषां द्वन्द्वः क्षुद्रा अल्पा उपायाः । (६) अक्षाः पाशकाः तैरुपलक्षितं द्यूतं ज्ञेयं, पानं मद्यादेः, वाक्पारुष्यं कर्कशवचनं, अर्थस्य दूषणं तच्चतुर्द्धा अदान १ आदानं २

दण्डपारुष्यमित्येतद्धेयं व्यसनसप्तकम् ।

पौरुषं विक्रमः शौर्यं शौण्डीर्य्यं[(१)] च पराक्रमः ॥ ४०३ ॥

यत्कोशदण्डजं तेजः[(२)] स प्रभावः प्रतापवत् ।

भिया धर्म्मार्थकामैश्च परीक्षा या तु सोपधा[(३)] ॥ ४०४ ॥

तन्मद्राद्यषडक्षीणं यत्तृतीयाद्यगोचरः ।

रहस्यालोचनं मन्त्रो[(४)] रहश्छन्नमुपह्वरम् ॥ ४०५ ॥

विविक्तविजनैकान्तनिःशलाकानि केवलम् ।

गुह्ये रहस्यं नायस्तु देशरूपं समञ्जसम् ॥४०६॥

कल्पाभ्रेषौ नयो नाय्यं तूचितं युक्तसांप्रते ।

लभ्यं प्राप्तं भजमानाभिनीतौपयिकानि च ॥ ४०७ ॥

प्रक्रिया त्वधिकारोऽथ मर्य्यादा धारणा स्थितिः ।

---

विनाशः ३ परित्यागश्च ४ दण्डेन पारुष्यं दण्डपारुष्यं तीक्ष्णदण्डता एतानि सप्त व्यसनानि प्रोच्यन्ते । (१) शौण्डीरस्य भावः कर्म वा शौण्डीर्यं शौ-डीर्यमिति वा ।(२) तेज इति प्रभुत्वशक्तिभवमुत्कटत्वं । (३) धर्मका-मार्थभयोपन्यासेन अमात्यानामाशयान्वेषणमुपधा इत्युच्यते । (४) मंत्रः पञ्चाङ्गः यत्कौटिल्य आह । "कर्मणामारंभोपायः १ पुरुषद्रव्यसंपत् २ देशकालविभागः ३ विनिपातप्रतीकारः ४ कार्यसिद्धिश्चेति पञ्चाङ्गानि" ॥

संस्थौपराधस्तु मन्तु[2]र्व्यलीकं[3] विप्रियागसी[5] ॥ ४०८ ॥
बलिः[1] करो[2] भागधेयो[3] द्विपाद्यो[1] द्विगुणो दमः ।
वाहिनी[1] पृतना[2] सेना[3] बलं[4] सैन्य[5]मनीकिनी[6] ॥ ४०९ ॥
कटकं[7] ध्वजिनी[8] तन्त्रं[9] दण्डोऽनीकं[10] पताकिनी[11] ।
वरूथिनी[12] चमू[13]श्चक्रं[14] स्कन्धावारो[1]ऽस्य तु स्थितिः ॥४१०॥
शिबिरं[1] रचना तु स्यात् व्यूहो[1] दण्डादिको (१)युधि ।
(२)प्रत्यासारो[1] व्यूहपार्ष्णिः[2] सैन्यपृष्ठे प्रतिग्रहः[3] ॥ ४११ ॥
(३)एकेभैकरथा त्र्यश्वाः पत्तिः[1] पञ्चपदातिका ।

---

(१) युधि संग्रामनिमित्तं सैन्यानां रचना (विन्यासविशेषः) व्यूहः । (२) प्रत्यासरतीति प्रत्यासार॰ सैन्यरचनायाः पश्चाद्भाग इत्यर्थः । (३) यद्भारतम् "एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" । पत्तेः सम्बन्धिभिरिभरथाश्वपदातिभिः क्रमेण त्रिगुणितैः सेनादीनि नामानि क्रमेण भवन्ति । तेन पत्तिस्त्रिगुणा सेना १ सेना त्रिगुणा सेनामुखं २ सेनामुखं त्रिगुणं गुल्मः ३ गुल्मस्त्रिगुणो वाहिनी ४ वाहिनी त्रिगुणा पृतना ५ पृतना त्रिगुणा चमूः ६ चमूस्त्रिगुणा अनीकिनी ७ यदाहुः "पत्ती १ सेणा २ सेणामुहञ्च ३ गुम्मञ्च ४ वाहिनी चेव ५ पिञ्यणा ६ चमू ७ अनीगिणि ८ दशगणिञ्या अक्खोहिणी होइ ९ । तथा च स्यात्सेनाक्षौहिणी नाम खागाष्टैकद्विकैर्गजैः २१८७० । रथैः

सेना[2] सेनामुखं[3] गुल्मो[4] वाहिनी[5] पृतना[6] चमूः[7] ॥ ४१२ ॥
अनीकिनी[8] च पत्तेः स्यादिभाद्यैस्त्रिगुणैः क्रमात् ।
दश(१)नीकिन्योऽक्षौहिणी[8] सज्जनं[1] तूपरक्षणम् ॥ ४१३ ॥
वैजयन्ती[1] पुनः केतुः[2] पताका[3] केतनं[4] ध्वजः[5] ।
अस्योच्चूला[1]वचूला[2]ख्यावूर्ध्वाधोमुखकूर्चकौ ॥ ४१४ ॥
गजो[1] वाजी[2] रथः[3] पत्तिः[4] सेनाङ्गं स्याच्चतुर्विधम् ।
युद्धार्थे चक्रवद्याने शताङ्गः[1] स्यन्दनो[2] रथः[3] ॥ ४१५ ॥
स क्रीडार्थः पुष्परथो[1] देवार्थस्तु मरुद्रथः[2] ।
योग्या(२)रथो[1] वैनायिको[2]ऽध्वरथः पारियानिकः[1] ॥ ४१६ ॥
कर्णी(३)रथः[1] प्रवहणं[2] डयनं[3] रथगर्भकः[4] ।
अनस्तु[1] शकटो[2]ऽथ स्याद्गन्त्री[1] कम्बलिवाह्यकम्[2] ॥ ४१७ ॥
अथ काम्बल[1]वास्त्रा[2]द्यास्तैस्तैः परिवृते रथे ।
स पाण्डुकम्बली[1]यः स्यात् संवीतः पाण्डुकम्बलैः ॥ ४१८ ॥
स तु द्वैपो[1] वैयाघ्रश्च[2] यो वृतो द्वीपिचर्म्मणा ।

---

२१८७० श्चेभ्यो हयैस्त्रिघ्नैः ६५६१० पञ्चघ्नैश्च पदातिभिः १०७३५०" इति (१) दशगुणा अनीकिनी इत्यर्थः । (२) शास्त्राभ्यासार्थं रथः योग्या इति । (३) नरवाह्यरथस्येमानि नामानि ।

रथाङ्गं रथपादोऽरि चक्रं धारा पुनः प्रधिः ॥ ४१९ ॥
नेमिरक्षाग्रकीले त्वण्याणी नाभिस्तु पिण्डिका ।
युगन्धरं कूबरं स्यात् युगमीशान्तबन्धनम् ॥ ४२० ॥
युगकीलकस्तु शम्याः प्रासङ्गस्तु युगान्तरम् ।
अनुकर्षो दार्वधस्थं धूर्वी यानमुखं च धूः ॥ ४२१ ॥
रथगुप्तिस्तु वरूथो रथाङ्गानि त्वपस्कराः ।
शिबिका याप्ययानेऽथ दोला प्रेङ्खादिका भवेत् ॥ ४२२ ॥
वैनीतकं परम्परावाहनं शिबिकादिकम् ।
यानं युग्यं पत्रं वाह्यं वह्यं वाहनधोरणे ॥ ४२३ ॥
नियन्ता प्राजिता यन्ता सूतः सव्येष्टृसारथी ।
दक्षिणस्थप्रवेतारौ क्षत्ता रथकुटुम्बिकः ॥ ४२४ ॥
रथारोहिणि तु रथी रथिके रथिरो रथी ।
अश्वारोहे त्वश्ववारः सादी च तुरगी च सः ॥ ४२५ ॥
हस्त्यारोहे सादियन्तृमहामात्रनिषादिनः ।

---

(१) अरिणी अरीणि नान्तं क्लीबे । (२) युगः पुंसि क्लीबे च । (३) रथगुप्ति इति रथसन्नाहस्य नाम । (४) प्रचेतारौ इति वा पाठः । (५) सादी सादिनौ इन्नन्तः । तथैव तुरगी ।

आधोरणा हस्तिपका गजाजीवेभपालकाः ॥ ४२६ ॥
योद्धारस्तु भटा योधाः सेनारक्षास्तु सैनिकाः ।
सेनायां ये समवेतास्ते सैन्याः सैनिका अपि ॥ ४२७ ॥
ये सहस्रेण योद्धारस्ते साहस्राः सहस्रिणः ।
छायाकरः छत्रधारः पताकी वैजयन्तिकः ॥ ४२८ ॥
(१) परिधिस्थः परिचर आमुक्तः प्रतिमुक्तवत् ।
अपिनद्धः पिनद्धोऽथ सन्नद्धो व्यूढकङ्कटः ॥ ४२९ ॥
दंशितो वर्म्मितः सज्जः सन्नाहो वर्म कङ्कटः ।
जगरः कवचं दंशस्तनुत्रं माठ्युरश्छदः ॥ ४३० ॥
निचोलकः स्यात्कूर्पासो वारबाणश्च कञ्चुकः ।
(२) सारसनं त्वधिकाङ्गं हृदि धार्यं सकञ्चुकैः ॥ ४३१ ॥
शिरस्त्राणे तु शीर्षण्यं शिरस्कं शीर्षकं च तत् ।

---

(१) परिधिस्थादिद्वयं सज्जीभूतस्य। (२) सारं सनोति ददाति सारसनम् अधिकमङ्गादधिकाङ्गं पुंक्लीबलिङ्गः अधियाङ्गमित्येके यन्मुनिः "अधियाङ्गं सारसनम्" भृगुस्तु "तस्य सारसनं ज्ञेयमधियाङ्गञ्च निबन्धनमित्याह । शब्दरत्नाकरोऽपि "कञ्चुके वारबाणः स्यात् बाणवारोऽधियाङ्गवत् । अधियाङ्गमधिकाङ्गं सारसने त्रयं स्मृतम्" इति ।

नागोदं[1] मुदरत्राणं[2] जङ्घात्राणं[1] तु मत्कुणम्[2] ॥ ४३२ ॥
बाहुत्राणं[1] बाहुलं[2] स्याज्जालिका[1] त्वङ्गरक्षणी[2] ।
जालप्राया[3]ऽऽयसी[4] स्यादायुधीयः[1] शस्त्रजीविनि[2] ॥ ४३३ ॥
काण्डपृष्ठा[3]ऽऽयुधिकौ[4] च तुल्यौ प्रासिक[1]कौन्तिकौ[2] ।
पारश्वधिकस्तु[1] पारश्वधः[2] परश्वधायुधः[3] ॥ ४३४ ॥
स्युर्नैस्त्रिंशिकशाक्तीक—याष्टीकास्तत्तदायुधाः ।
तूणी[1](1) धनुर्भृत्[2] धानुष्कः[3] स्यात्काण्डीरस्तु[1] काण्डवान्[2] ४३५
कृतहस्तः[1] कृतपुङ्खः[2] सुप्रयुक्तशरो हि यः ।
शीघ्रवेधी[1] लघुहस्तोऽपराद्धेषुस्तु[1] लक्ष्यतः(2) ॥ ४३६ ॥
च्युतेषुर्दूरवेधी[1] तु दूरापा(3)त्या[2]युधं[1] पुनः ।
हेतिः[1] प्रहरणं[2] शस्त्र[3]मस्त्रं[4] तच्च चतुर्विधम् ॥ ४३७ ॥
मुक्तं[1] द्विधा प्राणियन्त्रै[2]मुक्तं शक्तिशरादिकम् ।
अमुक्तं[3] शस्त्रिकादि स्याद्यष्ट्याद्यं तु द्वयात्मकम्[4] ॥ ४३८ ॥

---

(१) तूणिनौ तूणिनः । (२) "सुप्रवेदपराद्धेषुर्यस्य लक्ष्याच्च्युतः शरः" इति । (३) दूरापाती इन्नन्तः । (४) पाणिमुक्तं शक्त्यादि १ । यन्त्रमुक्तं शरादि २ । "शक्त्यादि पाणिमुक्तं १ स्यादमुक्तं क्षुरिकादिकम् । मुक्तामुक्तं च यष्ट्यादि यन्त्रमुक्तं शरादिकम्" इति हलायुधः ।

(१)धनुश्चापोस्त्रमिष्वासः कोदण्डं (२)धन्व कार्मुकम् ।
(३)द्रुणासौ लस्तकोऽस्यान्तरग्रं त्वार्त्तिरटन्यपि ॥ ४३९ ॥
मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं द्रुणा ।
सिञ्जिनी ज्या च गोधा तु तलं ज्याघातकारणम् ॥ ४४० ॥
(४)स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम् ।
समपादं च वेध्यं तु लक्ष्यं लक्षं शरव्यकम् ॥ ४४१ ॥

बाणे पृषत्कविशिखौ खगगार्द्धपक्षौ
काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्र-
रोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥ ४४२ ॥

प्रक्ष्वेडनः सर्वलोहो नाराच एषणश्च सः ।

---

(१) धनुष्, धनु, धनू इति त्रीण्येव प्रातिपदिकानि दृश्यन्ते। धन्यति धनति शब्दायते ज्याघातेन वा धनुः रुज्यर्त्तेऽत्युस् श्लिष्टनिर्देशात्, भृमृ-नृति उप्रत्यये धनुरुकारांतोऽपि, द्वावपि पुंक्लीबलिङ्गौ कृषिचमीति ऊप्रत्यये स्त्रीलिङ्गो धनूरपि, (पुं. क्ली.) धनुः धनुषौ धनुषः, धनुः धनुषी धनूंषि, (पुं. क्ली.) धनुः धनू धनवः । (२) धन्वन्शब्दो नान्तः, धन्वनी धन्वानि इति रूपं क्लीबे । (३) अस्यन्ते बाणा अनेनेति आसः पुंसि क्लीबे च । (४) स्थानानि बाणमोचनावसरे कर्त्तव्यानि ।

नागोद[1]मुदरत्राणं[2] जङ्घात्राणं[1] तु मत्कुणम्[2] ॥ ४३२ ॥
बाहुत्राणं[1] बाहुलं[2] स्याज्जालिका[1] त्वङ्गरक्षणी[2] ।
जालप्राया[3]यसी[4] स्यादायुधीय[1]ः शस्त्रजीविनि[2] ॥ ४३३ ॥
काण्डपृष्ठा[3]युधिकौ[4] च तुल्यौ प्रासिक[1]कौन्तिकौ[2] ।
पारश्वधिकस्तु[1] पारश्वध[2]ः परश्वधायुध[3]ः ॥ ४३४ ॥
स्युर्नैस्त्रिंशिक[1]शाक्तीक[1]–याष्टीका[1]स्तत्तदायुधाः ।
(१)तूणी[1] धनुर्भृत्[2] धानुष्क[3]ः स्यात्काण्डीर[1]स्तु काण्डवान्[2] ४३५
कृतहस्त[1]ः कृतपुङ्ख[2]ः सुप्रयुक्तशरो हि यः ।
शीघ्रवेधी[1] लघुहस्तो[2]ऽपराद्धेषुस्तु[1] लक्ष(२)त[2]ः ॥ ४३६ ॥
च्युतेषुर्दूरवेधी[1] तु दूरा(३)पा[2]त्यायुधं[1] पुनः ।
हेतिः[1] प्रहरणं[2] शस्त्र[3]मस्त्रं[4] तच्च चतुर्विधम् ॥ ४३७ ॥
(४)मुक्तं[1] द्विधा प्राणि[1]यन्त्रै[2]मुक्तं शक्तिशरादिकम् ।
अमुक्तं[2] शस्त्रिकादि स्याद्यष्ट्याद्यं तु द्वयात्मकम्[3] ॥ ४३८ ॥

---

(१) तूणिनौ तूणिनः । (२) "सुमवेदपराद्धेषुर्यस्य लक्ष्याच्च्युतः शरः" इति । (३) दूरापाती इन्नन्तः । (४) पाणिमुक्तं शक्त्यादि १ । यन्त्रमुक्तं शरादि २ । "शक्त्यादि पाणिमुक्तं १ स्यादमुक्तं क्षुरिकादिकम् । मुक्ता-मुक्तं च यष्ट्यादि यन्त्रमुक्तं शरादिकम्" इति हलायुधः ।

[1]धनुश्चापोस्त्रमिष्वासः कोदण्डं [2]धन्व कार्मुकम्।
[3]द्रुणासौ लस्तकोऽस्यान्तरग्रं त्वर्त्तिरटन्येपि ॥ ४३९ ॥
मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं द्रुणा।
सिञ्जिनी ज्या च गोधा तु तलं ज्याघातकारणम्॥४४०॥
[4]स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम्।
समपादं च वेध्यं तु लक्ष्यं लक्षं शरव्यकम् ॥४४१॥

बाणे पृषत्कविशिखौ खगगार्द्धपक्षौ
काण्डाशुगप्रदरसायकपत्रवाहाः।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्र-
रोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥ ४४२ ॥

प्रक्ष्वेडनः सर्वलोहो नाराच एषणश्च सः।

---

(१) धनुष्, धनु, धनू इति त्रीण्येव प्रातिपदिकानि दृश्यन्ते। धन्यति धनति शब्दायते ज्याघातेन वा धनुः रुज्यर्त्तेऽत्युस् श्लिष्टनिर्देशात्, भृमृ-नृति उप्रत्यये धनुरुकारांतोऽपि, द्वावपि पुंक्लीबलिङ्गौ कृषिचमीति ऊप्रत्यये स्त्रीलिङ्गो धनूरपि, (पुं. क्ली.) धनुः धनुषौ धनुषः, धनुः धनुषी धनूंषि, (पुं. क्ली.) धनुः धनू धनवः। (२) धन्वन्शब्दो नान्त., धन्वनी धन्वानि इति रूपं क्लीबे। (३) अस्यन्ते बाणा अनेनेति आसः पुंसि क्लीबे च। (४) स्थानानि बाणमोचनावसरे कर्त्तव्यानि।

निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ॥ ४४३ ॥
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता ।
क्षुरप्रतद्भल्लार्धेन्दुतीरीमुख्यास्तु तद्भिदः ॥ ४४४ ॥
पक्षो वाजः पत्रणा तन्न्यासः पुङ्खस्तु कर्त्तरी ।
तूणो निषङ्गस्तूणीर उपासङ्गः शराश्रयः ॥ ४४५ ॥

शरधिः कलापोऽप्यथ चन्द्रहासः
करवालनिस्त्रिंशकृपाणखड्गाः ।
तरवारिकौक्षेयकमण्डलाग्रा
असिर्ऋष्टिरिष्टी त्सरुरस्य मुष्टिः ॥ ४४६ ॥

प्रत्याकारः परीवारः कोशः खड्गपिधानकम् ।
अङ्कनं फलकं चर्म खेटकावरणस्फुराः (१) ॥ ४४७ ॥
अस्य मुष्टिस्तु संग्राहः क्षुरी छुरी कृपाणिका ।
शस्त्र्यसि(२)धेनुपुत्र्यौ च पत्रपालस्तु सा यता ॥ ४४८ ॥
दण्डो यष्टिश्च लगुडः स्यादीली करवालिका ।

---

(१) स्फुर स्फूर्त्तिचलनयोः स्फुर चेति धातुद्वयादच् स्फुरति चलति इति स्फुरः । स्फुरकोऽप्यत्र एवं स्फुरः स्फुरत्क इत्यपि । (२) असिधेनुः ५ असिपुत्री ६ ।

भिन्दिपाले[1] सृगः कुन्ते प्रासोऽथ द्रुघणो घनः ॥ ४४९ ॥
मुद्गरः स्यात्कुठार[2]स्तु परशुः पर्शुपर्श्वधौ ।
परश्वधः स्वधितिश्च परिघः परिघातनः ॥ ४५० ॥
सर्व्वला[3] तोमरे शल्यं शङ्कौ शूले त्रिशीर्षकम् ।
शक्तिपट्टिशदुस्फोटचक्राद्याः[4] शस्त्रजातयः ॥ ४५१ ॥
खुरली[5] तु श्रमो योग्याभ्यासस्तद्भूः खलूरिका ।
सर्वाभिसारः सर्वौघः सर्व्वसन्नहनं समाः ॥ ४५२ ॥
लोहाभिसारो दशम्यां विधिर्नीराजनात्परः ।
प्रस्थानं गमनं व्रज्याऽभिनिर्य्याणं प्रयाणकम् ॥ ४५३ ॥
यात्राभिषेणनं तु स्यात् सेनयाभिगमो रिपौ ।
स्यात्सुहृद्बलमासारः प्रचक्रं चलितं बलम् ॥ ४५४ ॥
प्रसारस्तु प्रसरणं तृणकाष्ठादिहेतवे ।

---

(१) भिन्दिपालो नाम हस्तक्षेप्यो महाफलो दीर्घदंड आयुधविशेषः इत्यस्य टीका । (२) कुठिः सौत्रो धातुः कोठतीति कुठारः पुंस्त्रीलिङ्गः तुषिकुठिभ्यां किदित्यारः कुठारः कुठान् वृक्षानियर्त्तीति वा । (३) सर्वला तोमरोऽस्त्रियामित्यमरः । (४) चक्रः पुंसि क्लीबे च । (५) शस्त्राभ्यासस्य ।

अभिक्रमो रणे यानमभीतस्य रिपून्प्रति ॥ ४५५ ॥
अभ्यमित्र्यो(१)ऽभ्यमित्रीयोऽभ्यमित्रीणोऽभ्यरिव्रजन् ।
स्यादुरस्वानुरसिलौ ऊर्जस्व्यूर्जस्वलौ समौ ॥ ४५६ ॥
सांयुगीनो रणे साधुर्जेता जिष्णुश्च जित्वरः ।
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥ ४५७ ॥
वैतालिका बोधकरा अर्थिकाः सौखसुप्तिकाः ।
घाण्टिकाश्चाक्रिकाः सूतो बन्दी(२) मङ्गलपाठकः ॥ ४५८ ॥
मागधो मगधः संशप्तका युद्धा निवर्त्तिनः ।
नग्नः स्तुतिव्रतस्तस्य ग्रन्थो भोगावली भवेत् ॥ ४५९ ॥
प्राणः स्थाम तरः(३) पराक्रमबलद्युम्नानि(४) शौर्यौजसी
शुष्मं शुष्मं च शक्तिरूर्ज्जसहसी युद्धं तु सङ्ख्यं कलिः ।
सङ्ग्रामाहवसम्प्रहारसमराजन्यं युदा(५)योधनं
संस्फोटः कलहो मृधं प्रहरणं संयद्(६)रणो विग्रहः ॥ ४६० ॥
द्वन्द्वं समाघातसमाह्वयाभि

---

(१) शत्रुसन्मुखगामिनः । (२) बन्दिनौ बन्दिनः । (३) तरसी तरासि । (४) द्युम्नन् नान्तः क्लीबे । (५) युत् युधौ युधः स्त्री । (६) संयतौ संयतः स्त्रियाम् ।

सम्पात[21]संमर्द[22]समित्[23]प्रघाता[24]ः ।
आस्कन्दना[25]जि[26]प्रधना[27]न्यनीक[28]-
मभ्यागमश्च[29] प्रविदारणं[30] च ॥ ४६१ ॥

समुदायः[31] समुदयो[32] राटिः[33] समितिः[(1)] [34] सङ्गरौ[35] ।
अभ्यामर्दः[36] सम्परायः[37] समीकं[38] साम्परायिकम्[39] ॥ ४६२ ॥
आक्रन्दः[40] संयुगं[41] चाथ नियुद्धं[1] तद्भुजोद्भवम्[(2)] ।
पटहा[(3)] [1]डम्बरौ[2] तुल्यौ तुमुलं[1] रणसङ्कुलम् ॥ ४६३ ॥
नारीसं[1] त्वग्रयानं[2] स्यादवमर्द[1]स्तु पीडनम्[2] ।
प्रपात[1]स्त्वभ्यवस्कन्दो[2] धाट्य[3]भ्यासादनं[4] च सः ॥ ४६४ ॥
तद्रात्रौ सौप्तिकं वीराशंसनं त्वाजिभीष्मभूः ।
नियुद्धभूरक्षवाटो[1] मोहो[1] मूर्च्छा[2] च कश्मलम्[3] ॥ ४६५ ॥
वृत्ते भाविनि वा युद्धे पानं स्याद्वीरपाणकम् ।
पलायन[1]मपयानं[2] सन्द्राव[3]द्द्राव[4]विद्रवाः[5] ॥ ४६६ ॥
अपक्रमः[6] समुत्-प्रेभ्यो[(5)] द्रावोऽथ विजयो[1] जयः[2] ।

---

(१) समितौ समितः स्त्रियाम् । (२) बाहुयुद्धं । (३) संग्रामवाद्यस्य नाम्नी । (४) संग्रामे प्रहारान्मोहो वैचित्त्यं मूर्च्छा मूर्च्छनं तयोः कश्मलमित्येकं नाम (५) संद्रावः ७ उद्द्रावः ८ प्रद्रावः ९ ।

अभिक्रमो[1] रणे यानमभीतस्य रिपून्प्रति ॥ ४५५ ॥
(१)अभ्यमित्र्यो[1]ऽभ्यमित्रीयो[2]ऽभ्यमित्रीणो[3]ऽभ्यरिव्रजन् ।
स्यादुरस्वानु[1]रसिलौ[2] ऊर्जस्व्यू[1]र्जस्वलौ[2] समौ ॥ ४५६ ॥
सांयुगीनो[1] रणे साधुर्जेता[1] जिष्णुश्च[2] जित्वरः[3] ।
जय्यो[1] यः शक्यते जेतुं जेयो[1] जेतव्यमात्रके ॥ ४५७ ॥
वैतालिका[1] बोधकरा[2] अर्थिका[3] सौखसुप्तिकाः[4] ।
घाण्टिका[1]श्चाक्रिकाः[2] सूतो[1] (२)बन्दी[2] मङ्गलपाठकाः[3] ॥ ४५८ ॥
मागधो[4] मगधाः[5] संशप्तका[1] युद्धा निवर्त्तिनः ।
नग्नः[1] स्तुतिव्रता[2]स्तस्य ग्रन्थो भोगावली[1] भवेत् ॥ ४५९ ॥
प्राणः[1] स्थाम[2] (३)तरः[3] पराक्रम[4]बल[5]द्युम्नानि[6] शौर्य[7]ओजसी[8]
शुष्मं[9] शुष्म[10] च शक्ति[11]रूर्ज[12]सहसी[13] युद्धं[1] तु सङ्ख्यं[2] कलिः[3] ।
सङ्ग्राम[4]आहव[5]सम्प्रहार[6]समर[7]आजन्यं[8] (५)युद्[9]आयोधनं[10]
संस्फोटः[11] कलहो[12] मृधं[13] प्रहरणं[14] (६)संयद्[15]रणो[16] विग्रहः[17] ॥ ४६० ॥
द्वन्द्वं[18] समाघात[19]समाह्वय[20]आभि

---

(१) शत्रुसन्मुखगामिन. । (२) वन्दिनौ वन्दिनः । (३) तरसी तरासि । (४) द्युम्नन् नान्त' क्लीबे । (५) युत् युधौ युधः स्त्री । (६) संयतौ संयतः स्त्रियाम् ।

सम्पातसंमर्दसमित्प्रघाताः ।
आस्कन्दनाजिप्रधनान्यनीक-
मभ्यागमश्चैव प्रविदारणं च ॥ ४६१ ॥

समुदायः समुदयो राटिः समिति(१)सङ्गरौ ।
अभ्यामर्दः सम्परायः समीकं साम्परायिकम् ॥ ४६२ ॥
आक्रन्दः संयुगं चाथ नियुद्धं तद्भुजोद्भवम्(२) ।
पटहा(३)डम्बरौ तुल्यौ तुमुलं रणसङ्कुलम् ॥ ४६३ ॥
नारीसं त्वग्रयानं स्यादवमर्दस्तु पीडनम् ।
प्रपातस्त्वभ्यवस्कन्दो धाट्यभ्यासादनं च सः ॥ ४६४ ॥
तद्रात्रौ सौप्तिकं वीराशंसनं त्वाजिभीष्मभूः ।
नियुद्धभूरक्षवाटो मोहो मूर्च्छा च कश्मलम्(४) ॥ ४६५ ॥
वृत्ते भाविनि वा युद्धे पानं स्याद्वीरपाणकम् ।
पलायनमपयानं सन्द्रावद्रवविद्रवाः ॥ ४६६ ॥
अपक्रमः समुत्-प्रेभ्यो(५) द्रावोऽथ विजयो जयः ।

---

(१) समितौ समितः स्त्रियाम् । (२) बाहुयुद्धं । (३) संग्रामवाद्यस्य नाम्नी । (४) संग्रामे प्रहारान्मोहो वैचित्त्यं मूर्च्छा मूर्च्छनं तयोः कश्मलमित्येकं नाम (५) संद्रावः ७ उदूद्रावः ८ प्रद्रावः ९ ।

पराजयो रणे भङ्गो डमरे(१)[1] डिम्बविप्लवौ[2] ॥ ४६७ ॥
वैरनिर्यातनं[1] वैरशुद्धिर्वैरप्रतिक्रिया[3] ।
बलात्कारस्तु प्रसभं(२)[2] हठोऽथ स्खलितं(३)[1] छलम्[2] ॥ ४६८ ॥
परा(४)-पर्य-भितो भूतो[3] जितो भग्नः पराजितः ।
पलायितस्तु नष्टः स्यात् गृहीतदिक् तिरोहितः ॥ ४६९ ॥
जिताहवो जितकाशी प्रस्कन्नपतितौ[2] समौ ।
चारः कारागुप्तौ[2] बन्द्यां ग्रहकः प्रोप(५)तो ग्रहः ॥ ४७० ॥
चातुर्वर्ण्यं[1] द्विजक्षत्रवैश्यशूद्रा नृणां भिदः ।
ब्रह्मचारी गृही[1] वानप्रस्थो[1] भिक्षुरिति क्रमात् ॥ ४७१ ॥

---

(१) उपद्रवविशेषस्य "लूट" इति भाषायां । (२) "प्रसभोऽस्त्रीति वैजयन्ती" । (३) "छलं तु स्खलिते व्याजे" इति महेश्वरः । स्खलितं परस्य वदतः स्वाभिमतार्थान्तरविकल्पोपपादनेन वचनविघातः । यथा कूपो नवोदक इति षट्दर्शनम् । वादिना कूपो नवोदक इति कथायां नवीनार्थ-वाचकतया नवशब्दप्रयोगे कृते छलवादी नवसङ्ख्यामारोप्य दूषयति कुत एक एव कूपो नवसङ्ख्योदक इति । मतिभ्रंशादिकं वा यच्चाणक्यः । "किं करोति नरः प्राज्ञः शूरोवाऽथ सुपण्डितः । दैवो यस्य च्छलान्वेषी करोति विफलाः क्रियाः" । (४) पराभूतः १ परिभूतः २ अभिभूतः ३ । (५) प्रग्रहः ३ उपग्रहः ४ ।

चत्वार आश्रमास्तत्र वर्णी[1] स्याद्ब्रह्मचारिणि[2] ।
ज्येष्ठाश्रमी[1] गृहमेधी[2] गृहस्थः[3] स्नातको[4] गृही[5] ॥ ४७२ ॥
वैखानसो[1] वानप्रस्थो[2] भिक्षुः[1] सान्न्यासिको[2] यतिः[3] ।
कर्म्मन्दी[4] रक्तवसनः[5] परिब्राजक[6]तापसौ[7] ॥ ४७३ ॥
पाराशरी[8] पारिकाङ्क्षी[9] मस्करी[10] परिरक्षकः[11] ।
स्थाण्डिलः[1] स्थण्डिलशायी[2] यः शेते स्थण्डिले व्रतात् ४७४
तपःक्लेशसहो दान्तः[2] शान्तः[1] श्रान्तो[2] जितेन्द्रियः[3] ।
अवदानं[1] कर्म्म शुद्धं ब्राह्मणस्तु त्रयीमुखः[2] ॥ ४७५ ॥
भूदेवो[3] वाडवो[4] विप्रो[5] द्व्यग्रेभ्यां[(1)] जाति-जन्म-जाः[11] ।
वर्णज्येष्ठः[12] सूत्रकण्ठः[13] षट्कर्म्मा[14] मुखसम्भवः[15] ॥ ४७६ ॥
वेदगर्भः[16] शमीगर्भः[17] सावित्रो[18] मैत्र[19] एतसः[(2)20] ।
बटुः[1] पुनर्माणवको[2] भिक्षा[1] स्याद्ग्रास[(3)]मात्रकम् ॥ ४७७ ॥

---

(१) द्विजातिः ६ द्विजन्मा ७ द्विजः ८ अग्रजातिः ९ अग्रजन्मा १० अग्रजः ११ अत्र द्विजत्वं "मातुरग्रे विजननं द्वितीयं मौञ्जीबन्धनमिति स्मृतेः" (२) एतसः एकादशस्वरादिस्तद्वर्गाद्यमध्योदन्त्यान्तश्च । (३) "ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः १" ।

उपनायस्तूपनयो बटूकरणमानयः ।
अग्नीन्धनं त्वग्निकार्यमाग्नीध्रा चाग्निकारिका ॥ ४७८ ॥
पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ।
बैल्वः सारस्वतो रौच्यः पैलवस्त्वौपरैधिकः ॥ ४७९ ॥
आश्वत्थस्तु जितनेमिरौदुम्बर उलूखलः ।
जटा सटा वृषी पीठं कुण्डिका तु कमण्डलुः ॥ ४८० ॥
श्रोत्रियश्छान्दसो यष्टा त्वादेष्टा स्यान्मखे व्रती ।
याजको यजमानश्च सोमयाजी तु दीक्षितः ॥ ४८१ ॥
इज्याशीलो यायजूको यज्वा स्यादासुतीवलः ।
सोमपः सोमपीथी स्यात् स्थपतिर्गीष्पतीष्टिकृत् ॥ ४८२ ॥
सर्ववेदास्तु सर्वस्वदक्षिणं यज्ञमिष्टवान् ।
यजुर्विदध्वर्युर्ऋग्विद्धोतोद्गाता तु सामवित् ॥ ४८३ ॥
यज्ञो यागः सवः सत्रं स्तोमो मन्युर्मखः क्रतुः ।

---

(१) यन्मनुः "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्" चत्वारि मौञ्जीबन्धनस्य । (२) ऋग्वेदकाण्डेऽग्निविशेषस्य । (३) रम्भाशब्दो वेणुपर्य्याय इति टीका, रम्भाया विकारो राम्भः । (४) औपरोधिक इति क्वचित्पाठः । (५) यष्टारौ यष्टारः आदेष्टारौ आदेष्टारः । (६) सर्ववेदसौ सर्ववेदसः । (७) उद्गातारौ उद्गातारः ।

संस्तरः सप्ततन्तुश्च वितानं बर्हिरध्वरः ॥ ४८४ ॥
अध्ययनं ब्रह्मयज्ञः स्याद्देवयज्ञ आहुतिः ।
होमो होत्रं वषट्कारः पितृयज्ञस्तु तर्पणम् ॥ ४८५ ॥
तच्छ्राद्धं पिण्डदानं च नृयज्ञोऽतिथिपूजनम् ।
भूतयज्ञो बलिः पञ्च महायज्ञा भवन्त्यमी ॥ ४८६ ॥
पौर्णमासश्च दर्शश्च यज्ञौ पक्षान्तयोः पृथक् ।
सौमिकी दीक्षणी येष्टिर्दीक्षा तु व्रतसंग्रहः ॥ ४८७ ॥
वृतिः सुगहना कुम्बा वेदी भूमिः परिस्कृता ।
स्थण्डिलं चत्वरं चान्या यूपः स्याद्यज्ञकीलकः ॥ ४८८ ॥
चषालो यूपकटको यूपकर्णौ घृतावनौ ।
यूपाग्रभागे स्यात्तर्म्मारणिर्निर्मन्थदारुणि ॥ ४८९ ॥

---

(१) बर्हिषी बर्हींषि । (२) ब्रह्मणो वेदस्य यजनं दानादि स ब्रह्मयज्ञः । (३) मन्त्रपूर्वकं जलदानं तर्पणम् । (४) दीक्षणीयस्य दीक्षार्हस्य इष्टिर्यज्ञः चन्द्रनिमित्तयागविशेषोऽयम् । (५) यागकालव्यवहार्योऽलङ्कारविशेषः । (६) सूत्रधारघटिता यूपशिरसि कटकाकृतिः । (७) घृतसिञ्चनस्थाने चेत् । (८) तर्म्मन क्लीबे वाचस्पतिस्तु "यूपाग्रे तर्म्म न स्त्रियामिति" [illegible]म विष्टौ तर्म्माणः इत्याद्यपि अन्यत्र तर्म्म तर्म्मणी

स्युर्दक्षिणाहवनीयगार्हपत्यास्त्रयोऽग्नयः ।
इदमग्नित्रयं त्रेता प्रणीतः संस्कृतोऽनलः ॥ ४९० ॥
ऋक् समिधेनी[1] धाय्या च समिदाधीयते यया ।
समिदिन्धनमेधैधस्तर्पणैधांसि[6] भस्म तु ॥ ४९१ ॥
स्याद्भूतिर्भसितं[2] रक्षा क्षारः पात्रं[1] स्रुवादिकम् ।
स्रुवः स्रुगधरा सोपभृज्जुहूः पुनरुत्तरा ॥ ४९२ ॥
ध्रुवा तु सर्वसंज्ञार्थं यस्यामाज्यं निधीयते ।
योभिमन्त्र्य निहन्येत स स्यात्पशुरुपाकृतः ॥ ४९३ ॥
परम्पराकं[1] शमनं[2] प्रोक्षणं[3] च मखे वधः ।
हिंसार्थं कर्माभिचारः स्याद्यज्ञार्हं तु यज्ञियम् ॥ ४९४ ॥
हविः[1] सान्नाय्यमामिक्षा शृतोष्णक्षीरगं दधि ।
क्षीरशरः पयस्या च तन्मस्तुनि तु वाजिनम् ॥ ४९५ ॥
हव्यं सुरेभ्यो दातव्यं पितृभ्यः कव्यमोदनम् ।
आज्ये तु दधिसंयुक्ते पृषदाज्यं पृषातकः ॥ ४९६ ॥
दध्ना तु मधु संयुक्तं मधुपर्कं महोदयः । , ८भार्शब्दो

(४) औपरोधिक इति

(१) भस्म भस्मनी भस्मानि । (२) दृष्टारौ आदेष्टारः । (६) सर्व-
जुह्वः । (३) तस्या आमिक्षाया मण्डे । शतारः ।

(१) हवित्री तु होमकुण्डं हव्यपाकः(२) पुनश्चरुः[1] ॥ ४९७ ॥
अमृतं[1] यज्ञशेषे[2] स्याद्विघसो[1] भुक्तशेषके[2] ।
यज्ञान्तो[1]ऽवभृथः[2] पूर्वं वाप्यादिष्टं[1] मखक्रिया ॥ ४९८ ॥
इष्टापूर्त्तं[1] तदुभयं बहिर्मुष्टिस्तु विष्टरः[1] ।
(३) अग्निहोत्र्यग्निचिच्चाहिताग्नावथाग्निरक्षणम्[1] ॥ ४९९ ॥
अग्न्याधानमग्निहोत्रं[3] दर्वी[1] तु घृतलेखनी ।
होमाग्निस्तु महाज्वालो[2] महावीरः[3] प्रवर्ग्यवत् ॥ ५०० ॥
होमधूमस्तु निगणो[1] होमभस्म तु वैष्टुतम्(४)[1] ।
उपस्पर्शस्त्वाचमनं[2] धारासेकौ[2] तु सेचने[3] ॥ ५०१ ॥
ब्रह्मासनं[1] ध्यानयोगासनेऽथ ब्रह्मवर्चसम्(५)[1] ।
वृत्ताध्ययनर्द्धिः पाठे स्याद् ब्रह्माञ्जलिरञ्जलिः ॥ ५०२ ॥
पाठे तु मुखनिष्क्रान्ता विप्रुषो ब्रह्मबिन्दवः[1] ।
(६) साकल्यवचनं पारायणं[1] कल्पे[1] विधिक्रमौ[2] ॥५०३॥

---

(१) हूयतेऽस्यां हवित्री। (२) हव्यस्य पाकः पचनमत्र हव्यपाकः स्थालीति केचित्। (३) अग्निहोत्रिणौ अग्निहोत्रिणः, अग्निचितौ अग्निचितः। (४) विशेषेण स्तूयते स्म विष्टुतोऽग्निस्तस्येदं वैष्टुतं। (५) ब्रह्मणो वर्चस्तेजो ब्रह्मवर्चसम्। चरित्राध्ययनसम्पन्ने। (६) सकलस्य भावः साकल्यं साक-

मूलेऽङ्गुष्ठस्य स्याद्ब्राह्मं तीर्थं कायकनिष्ठयोः ।
पित्र्यं तर्जन्यङ्गुष्ठान्तर्दैवतं त्वङ्गुलीमुखे ॥ ५०४ ॥
ब्रह्मत्वं तु ब्रह्मभूयं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं (१) तद्वदथोपाकरणं श्रुतेः ॥ ५०५ ॥
संस्कारपूर्वं ग्रहणं स्यात्स्वाध्यायः पुनर्जपः ।
औ(२)पवस्त्रं तूपवासः कृच्छ्रं सान्तपनादिकम् ॥ ५०६ ॥
प्रायः सन्न्यास्यनसने नियमः पुण्यकं व्रत(३)म् ।
चरित्रं चरिताचारौ चारित्रचरणे अपि ॥ ५०७ ॥
वृत्तं शीलं च सर्वैनोध्वंसि जप्येऽघमर्षणम् ।
समास्तु पादग्रहणाभिवादनोपसङ्ग्रहाः ॥ ५०८ ॥

---

ल्येन सामस्त्येन वचनं अध्ययनम् । "साकल्यवचनं प्राज्ञैः पारायणमुदाहृतम्" इति हलायुधः । (१) आदिशब्दात् स्वर्गभूयं स्वर्गत्वं स्वर्गसायुज्यमिति । (२) औपवस्त्रं उपवस्ता प्राप्तोऽस्य औपवस्त्रं ऋत्वादिभ्य इत्यण् "वस्तच् स्तम्भे" इत्यस्मात् क्ते उपवस्तास्पदमौपवस्तमित्येके, उपवस्त्रमित्यन्ये, उपवस्तुरिदमित्यन्नाद्योऽपि, यत् स्मृतिः "माषान्मधु मसूरांश्च वर्जयेदौपवस्त्रके" इति । "औपवस्त्रमुपवस्त्रमौपवस्तोपवस्तके" इति शब्दरत्नाकरः । (३) व्रतं पुंसि क्लीबे च ।

उपवीतं यज्ञसूत्रं प्रोद्धृते[(१)] दक्षिणे[(१)] करे ।
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ५०९ ॥
प्राचेतसस्तु वाल्मीकीर्वल्मिककुशिनौ कविः ।
मैत्रावरुणवाल्मीकौ वेदव्यासस्तु माठरः ॥ ५१० ॥
द्वैपायनः पराशर्य्यः कानीनो बादरायणः ।
व्यासोऽस्याम्बा सत्यवती वासवी गन्धकालिका ॥५११॥
योजनगन्धा दाशेयी शालङ्कायनजा च सा ।
जामदग्न्यस्तु रामः स्याद् भार्गवो रेणुकासुतः ॥५१२॥
नारदस्तु देवब्रह्मा पिशुनः कलिकारकः ।
वशिष्ठो[(२)]ऽरुन्धतीजानिरक्षमाला त्वरुन्धती ॥ ५१३ ॥
त्रिशङ्कुयाजी गाधेयो विश्वामित्रश्च कौशिकः ।
कुशारणिस्तु दुर्वासाः[(३)] शतानन्दस्तु गौतमः ॥ ५१४ ॥
याज्ञवल्क्यो ब्रह्मरात्रिर्योगेशोऽप्यथ पाणिनौ ।

---

(१) दक्षिणे करे प्रोद्धृते इति दक्षिणकराधोनिक्षिप्ते सूत्रे इत्यर्थः । (२) अयं दन्त्यवानपि, अतिशयेन वसुमान् वसिष्ठः गुणाङ्गादितीष्ठिविन्मतोर्णीष्वेति मतोर्लुपि प्रत्यंतस्वरादेरित्यंत्यस्वरादिलोपः । (३) दुर्वाससौ दुर्वाससः ।

सालातुरीय(१)दाक्षेयौ[2] गोनर्दीये[1] पतञ्जलिः[2] ॥ ५१५ ॥
कात्यायने[1] वररुचिर्[2]मेधाजिच्च[3] पुनर्वसुः[4] ।
अथ व्याडिर्[1]विन्ध्यवासी[2] नन्दिनीतनयश्च[3] सः ॥ ५१६ ॥
स्फोटायने[1] तु कक्षीवान्(२)[2] पालकाप्ये[1] करेणुभूः[2] ।
वात्स्यायने[1] मल्लनागः[2] कौटिल्य(३)श्[3]चणकात्मजः[4] ॥ ५१७ ॥
द्रामिलः[5] पक्षिलस्वामी[6] विष्णुगुप्तो[7]ऽङ्गुलश्च[8] सः ।
क्षतव्रतोऽवकीर्णी(४)[1] स्याद् व्रात्यः[1] संस्कारवर्जितः ॥५१८॥
शिश्विदानः[1] कृष्णकर्मा[2] ब्रह्मबन्धुर्[1]द्विजोऽधमः ।
नष्टाग्निर्वीरहा[2] जातिमात्रजीवी द्विजब्रुवः[1] ॥ ५१९ ॥
धर्मध्वजी[1] लिङ्गवृत्तिर्[2]वेदहीनो[1] निराकृतिः[2] ।
वार्त्ताशी[1] भोजनार्थं यो गोत्रादि वदति स्वकम् ॥५२०॥
उच्छिष्टभोजनो[1] देवनैवेद्यबलिभोजनः ।

---

(१) सलातुरं आभिजनो निवासोऽस्य सालातुरीयः सलातुरादीयण् । (२) कक्षीवन्तौ कक्षीवन्तः । (३) कौटल्य इति वा । कुटो घटस्तं लान्ति कुटलाः कुलधान्यास्तेषामपत्यं कौटल्यः, यद्यपि टीकाकृता एतत्साधितं तथापि पुस्तकमात्रे कौटिल्य इत्येव दृश्यते । (४) अवकीर्णिनौ अवकीर्णिनः ।

(१) अजपस्त्वसदध्येता शाखारण्डोऽन्यशाखकः ॥ ५२१ ॥
शस्त्राजीवः काण्डस्पृष्ठो गुरुहा नरकीलकः ।
मलो देवादिपूजायामश्राद्धोऽथ मलिम्लुचः ॥५२२॥
पञ्चयज्ञपरिभ्रष्टो निषिद्धैकरुचिः खरुः ।
सुप्ते यस्मिन्नुदेत्यर्कोऽस्तमेतिच क्रमेण तौ ॥ ५२३ ॥
अभ्युदिताभिनिर्मुक्तौ वीरोज्झो न जुहोति यः ।
अग्निहोत्रञ्छलाद् याञ्चापरो वीरोपवीजकः ॥ ५२४ ॥
वीरविप्लावको जुह्वद्धनैः शूद्रसमाहृतैः (२) ।
(३) स्याद्वादवाद्यार्हतः स्याच्छून्यवादी तु सौगतः ॥ ५२५ ॥
नैयायिकस्त्वाक्षपादो योगः साङ्ख्यस्तु कापिलः ।
वैशेषिकः स्यादौलूक्यो बार्हस्पत्यस्तु नास्तिकः ॥ ५२६ ॥
चार्वाको लौकायतिकश्चैते षडपि तार्किकाः ।
क्षत्रं तु क्षत्रियो राजा राजन्यो बाहुसम्भवः ॥ ५२७ ॥
अर्य्यो भूमिस्पशो वैश्या ऊरव्या ऊरुजा विशः ।

---

(१) नास्ति जपः स्वाध्यायोऽस्य । (२) शूद्रेभ्यः समाहृतैः । (३) स्याद्वादवादिन् शब्दः करिवत् । "स्यादस्ति" "स्यान्नास्ति" इत्येवंरीत्या वक्तुंशीलः । स्याद्वादसप्तभङ्गिनयौ इत्यर्हतां युक्तिनामनि ।

वाणिज्यं[१] पाशुपाल्यं[२] च कर्षणं[३] चेति वृत्तयः[१] ॥ ५२८ ॥
आजीवो[१] जीवनं[२] वार्त्ता[३] जीविका[४] वृत्ति[५]वेतने[६] ।
उञ्छो[१] धान्यकणादानं कणिशाद्यर्ज्जनं शिलम्[१] ॥ ५२९ ॥
ऋतं[१] तद्द्वयमनृतं[१] कृ[२]षिर्मृतं[१] तु याचितम्[१] ।
अयाचितं[१] स्यादमृतं[२] सेवावृत्तिः[१] श्वजीविका[२] ॥ ५३० ॥
सत्यानृतं[१] तु वाणिज्यं[२] वणिज्या[३] वाणिजो[१] वणिक्[२] ।
क्रयविक्रयिकः[३] पण्याजीवो[४]-पणिक[५]नैगमाः[६] ॥ ५३१ ॥
वैदेहः[७] सार्थवाहश्च[८] क्रायकः[१] क्रयिकः[२] क्रयी[३] ।
क्रेयदे[१] तु वि[(१)]पूर्वास्ते मूल्ये[१] वस्नो[२]र्घ[३]वक्रयाः ॥ ५३२ ॥
मूलद्रव्यं परिपणो[१] नीवी[२] लाभोऽधिकं फलम्[१] ।
परिदानं[१] विनिमयो[२] नैमेयः[३] परिवर्त्तनम्[४] ॥ ५३३ ॥
व्यतिहारः[५] परावर्त्तो[६] वैमेयो[७] निमे[(२)]योऽपि[८] च ।
निक्षेपो[१]पनिधी[२] न्यासे[३] प्रतिदानं[१] तदर्प्पणम् ॥ ५३४ ॥
क्रेतव्यमात्रके[१] क्रेयं[२] क्रय्यं[१] न्यस्तं क्रयाय यत् ।
पणितव्यं[१] तु विक्रेयं[२] पण्यं[३] सत्यापनं[१] पुनः ॥ ५३५ ॥

---

(१) विक्रायकः १ विक्रयिकः २ विक्रयी ३ विक्रयिता ४ । (२) नैमेयनिमयोऽपि च, वैमेयविमयोऽपि च, इति पाठद्वयमपि भवति ।

सत्यङ्कारः[२] सत्याकृतिः[३]स्तुल्यौ विपणविक्रयौ[२] ।
गण्यं(१)[१] गणेयं[२] सङ्ख्येयं[३] सङ्ख्या त्वेकादिका भवेत् ॥ ५३६ ॥
यथोत्तरं दशगुणं(२) भवेदेको[१] दशो[२]ऽमुतः ।
शतं[३] सहस्रं[४] मयुतं[५] लक्षं[६] प्रयुतं[७] कोटयः[८] ॥ ५३७ ॥
अर्बुदं[९] मब्जं[१०] खर्वं[११] च निखर्वं[१२] च महाम्बुजम्[१३] ।
शङ्कु[१४]र्वार्धि[१५]रन्त्यं[१६] मध्यं[१७] परार्द्धं[१८] चेति नामतः ॥ ५३८ ॥
असङ्ख्यं[१] द्वीपवार्ध्यादिपुद्गलात्माद्यनन्तकम्[१] ।
सांयात्रिकः(३)[१] पोतवणिग्[२] यानपात्रं[१] बहित्रकम्[२] ॥ ५३९ ॥
बोहित्थं[३] वहनं[४] पोतः[५] पोतवाहो[१] नियामकः[२] ।
निर्यामः[३] कर्णधारस्तु नाविको[२] नौस्तु[१] मङ्गिनी[२] ॥ ५४० ॥
तरी[३] तरण्यौ[४] वेडोऽथ[५] द्रोणी[१] काष्ठाम्बुवाहिनी ।
नौकादण्डः क्षेपणी[१] स्याद्गुणवृक्षस्तु[१] कूपकः[२] ॥ ५४१ ॥
पोलिन्दा[१]स्त्वन्तरादण्डाः स्यान्मङ्गो[१] मङ्गिनीशिरः ।
अभ्रि[१]स्तु काष्ठकुद्दालः सेकपात्रं[१] तु सेचनम् ॥ ५४२ ॥

---

(१) गण सङ्ख्याने कवर्गतृतीयाद्यस्वरादिर्धातुः । (२) दशगुणा सङ्ख्या यस्मिन् तद्दशगुणं क्रियाविशेषणमेतत् यथा एको दशभिर्गुणितो दश भवेत् । (३) सांयान्त्रिक इत्यपि ।

केनिपातः कोटिपात्रमरित्रेऽथोडुपः प्लवः ।
कोलो भेलस्तरण्डश्च स्यात्तरीपण्यमातरः ॥ ५४३ ॥
वृध्याजीवो द्वैगुणिको वार्द्धुषिकः कुसीदिकः ।
वार्द्धुषिश्च कुसीदार्थप्रयोगौ वृद्धिजीवने ॥ ५४४ ॥
वृद्धिः कलान्तरमृणं तूद्धारः पर्य्युदञ्चनम् ।
याञ्चयाप्तं याचितकं परिवृत्यापमित्यकम् ॥ ५४५ ॥
अधमर्णो ग्राहकः स्यादुत्तमर्णस्तु दायकः ।
(१) प्रतिभूर्लग्नकः साक्षी स्थेय आधिस्तु बन्धकः ॥ ५४६ ॥
तुलाद्यैः पौतवं मानं द्रुवयं कुडवादिभिः ।
पाय्यं हस्तादिभिस्तत्र स्याद्गुञ्जाः पञ्च माषकः ॥५४७॥
ते तु षोडश कर्षोऽक्षः पलं कर्षचतुष्टयम् ।
विस्तः सुवर्णो हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥ ५४८ ॥
तुला पलशतं तासां विंशत्या भार आचितः ।
शाकटः शाकटीनश्च शलाटस्ते दशाचितः ॥ ५४९ ॥
चतुर्भिः कुडवैः प्रस्थः प्रस्थैश्चतुर्भिराढकः ।

---

(१) "जामीन" इति ख्यातस्य ।

चतुर्भिराढकैर्द्रोणः खारी[1] षोडशभिश्च तैः ॥ ५५० ॥
चतुर्विंशत्याङ्गुलानां हस्तो[1] दण्डश्चतुष्करः ।
तत्सहस्रौ तु गव्यूतं[1] क्रोशस्[2]तौ द्वौ तु गोरुतम्[1] ॥ ५५१ ॥
गव्यो[2] गव्यूतं[3] गव्यूती[4] चतुःक्रोशं तु योजनम्[1] ।
पाशुपाल्यं[1] जीववृत्तिर्[2]गोमान्[1] गोमी[2] गवीश्वरे[3] ॥ ५५२ ॥
गोपाले[1] गोधुग्[2]आभीर[3]गोप[4]गोसङ्ख्य[5]वल्लवाः[6] ।
गोविन्दो[1]ऽधिकृतो गोषु जावालस्[1]त्वजजीविके[2]: ॥ ५५३ ॥
कुटुम्बी[1] कर्षकः[2] क्षेत्री[3] हली[4] कृषिक[5]कार्षकौ[6] ।
कृषीवलो[7]ऽपि जित्या(१) तु हलिः[2] सीरस्तु[1] लाङ्गलम्[2] ॥ ५५४ ॥
गोदारणं[3] हल[4]मीषा[1] सीते[2] तद्दण्डपद्धती ।
निरीषे(२) कुटकं[1] फाले[1] कृषकः[2] कुशिकः[3] फलम्[4] ॥ ५५५ ॥
दात्रं[1] लवित्रं[2] तन्मुष्टौ वण्टो[1] मत्यं[1] समीकृतौ ।
गोदारणं[1] तु कुद्दालः[2] खनित्रं[1] त्ववदारणम्[2] ॥ ५५६ ॥
प्रतोदस्[1]तु प्रवयणं[2] प्राजनं[3] तोत्र[4]तोदने[5] ।

---

(१) बृहद्धलस्य । (२) यस्याग्रे फालो विबध्यते तस्य, निष्क्रान्ता ईषा यस्मात्तत् निरीषं तस्मिन् ।

योत्रं[१] तु योक्त्रम्[२]आबन्धः[३] कोटिशो[१] लोष्टभेदनः[२] ॥ ५५७ ॥
मेधिर्[१]मेथिः[२] खलेवाली[३] खले गोबन्धदारु यत् ।
शूद्रो[१]ऽन्त्यवर्णो[२] वृषलः[३] पद्यः[४] पज्जो[५] जघन्यजः[६] ॥ ५५८ ॥
ते तु मूर्द्धावसिक्तादारथकृन्मिश्रजातयः ।
क्षत्रियायां द्विजान्मूर्द्धावसिक्तो[१] विट् स्त्रियां पुनः ॥५५९॥
अम्बष्ठो[२]ऽथ पारशव[१]निषादौ[२] शूद्रयोषिति ।
क्षत्रान्माहिष्यो[४] वैश्यायामुग्रस्[५]तु वृषलस्त्रियाम् ॥ ५६० ॥
वैश्यात्तु करणः[६] शूद्रात्त्वायोगवो[७] विशः स्त्रियाम् ।
क्षत्रियायां पुनः क्षत्ता[८] चण्डालो[९] ब्राह्मणस्त्रियाम् ॥५६१॥
वैश्यात्तु मागधः[१०] क्षत्र्यां वैदेहको[११] द्विजस्त्रियाम् ।
सूतस्[१२]तु क्षत्रियाज्जात इति द्वादश तद्भिदः ॥ ५६२ ॥
माहिष्येण तु जातः स्यात्करण्यां रथकारकः[१] ।
कारुस्[१]तु कारी[२] प्रकृतिः[३] शिल्पी[४] श्रेणिस्[१]तु तद्गणः ॥५६३॥
शिल्पं[१] कला[२] विज्ञानं[३] च मालाकारस्[१]तु मालिकः[२] ।
पुष्पाजीवः[३] पुष्पलावी[१] पुष्पाणामवचायिनी ॥ ५६४ ॥
कल्यपालः[१] सुराजीवी[२] शौण्डिको[३] मण्डहारकः[४] ।

वारिवासः पानवणिक्(१) ध्वजो ध्वज्यासुतीबलः ॥ ५६५ ॥

मद्यं मदिष्टा मदिरा परिस्रुता
कश्यं परिस्रुन्मधु कापिशायनम् ।
गन्धोत्तमा कल्यमिरा परिप्लुता
कादम्बरी स्वादुरसा हलिप्रिया ॥ ५६६ ॥

शुण्डा हाला हारहूरं प्रसन्ना वारुणी सुरा ।
माध्वीकं(२) मदना देवसृष्टा कापिशमब्धिजा ॥ ५६७ ॥

मध्वासवे माधवको मैरेये(३) शीधुरासवः(४) ।
जगलो मेदको मद्यपङ्कः किण्वन्तु नग्नहूः ॥ ५६८ ॥
नग्नहुर्मद्यबीजं च मद्यसन्धानमासुतिः ।

---

(१) "पानवणिजौ पानवणिजः ।" "ध्वजिनौ ध्वजिनः" यथा "दशचक्रिसमो ध्वजः" । (२) माध्वत्यनया माध्वीकं सृणीकास्तोके इके निपात्यते, माद्वीकविकारो मार्द्वीकमित्यन्ये, मार्द्वीक इति वा । (३) मिरायां देशे भवो मैरेयः गौड्याः सुराया विशेषोऽयं नद्यादित्वादेयण् मीरे समुद्रे भव इति वा तत्र । (४) शेरतेऽनेन सीधुः शीङोधुक् पुंक्लीबलिङ्गावेतौ । आसूयते आसवः । सुरा चतुर्द्धा "गौडी १ पैष्टी २ च माध्वी ३ च फलोत्था ४ चतुराः स्मृताः" इति ।

आसवो[१]ऽभिषवो मद्यमण्डकारोत्तमौ समौ ॥ ५६९ ॥
गल्वर्कस्तु चषकः स्यात्सरकश्चानुतर्षणम् ।
शुण्डा पानमदस्थानं मधुवारा मधुक्रमाः[२] ॥ ५७० ॥
सपीतिः सह[३]पानं स्यादापानं पानगोष्ठिका ।
उपदंशस्त्ववदंशश्चक्षणं मद्यपा[४]शनम् ॥ ५७१ ॥
नाडिन्धमः स्वर्णकारः कलादो मुष्टिकश्च सः ।
तैजसावर्त्तनी मूषा भस्त्रा चर्मप्रसेविका[५] ॥ ५७२ ॥
आस्फोटनी वेधनिका शाणस्तु निकषः कषः ।
सन्दंशः स्यात्कङ्कमुखो भ्रमः कुन्दं च यन्त्रकम् ॥५७३॥
वैकटिको मणिकारः शौल्विकस्ताम्रकुट्टकः ।
शाङ्खिकः स्यात्काम्बविकस्तन्तुवायस्तु सौचिकः ॥५७४॥
कृपाणी कर्त्तरी कल्पन्यपि सूची तु सेवनी ।
सूचिसूत्रं पिप्पलकं तर्कुः कर्त्तनसाधनम् ॥ ५७५ ॥
पिञ्जनं विहननं च तुलस्फोटनकार्मुकम् ।

---

(१) आसवनमासवः एवमभिषवश्च । (२) मद्यपानावसरस्य द्वे । (३) मिलित्वा मद्यपानस्य द्वे । (४) मद्यपानरुचिकरभक्ष्यस्य चत्वारि । (५) "पुंसि चर्मप्रसेवकः" इति कोशान्तरम् ।

सेवनं सीवनं स्यूतिस्तुल्यौ स्यूतप्रसेवकौ ॥ ५७६ ॥
तन्तुवायः कुविन्दः स्यात् त्रसरः सूत्रवेष्टनम् ।
वाणिर्व्यूतिर्वानदण्डो वेमी(१) सूत्राणि तन्तवः(२) ५७७ ॥
निर्णेजकस्तु(३) रजकः पादुकाकृत्तु चर्म्मकृत् ।
उपानत्(४) पादुका पादूः पन्नद्धा पादरक्षणम् ॥ ५७८ ॥
प्राणाहिताऽनुपदीना(५) त्वाबद्धाऽनुपदं हि या ।
नद्धी वद्धी वरत्रा स्यादारा चर्म्मप्रभेदिका ॥५७९॥
कुलालः स्यात्कुम्भकारो दण्डभृच्चक्रजीवकः ।
शाणाजीवः शस्त्रमार्जो भ्रमाशक्तोऽसिधावकः ॥ ५८० ॥
धूसरश्चाक्रिकस्तैली स्यात्पिण्याकखलौ समौ ।
रथकृत् स्थपतिस्त्वष्टा(६) काष्ठतट् तक्षवर्द्धकी ॥ ५८१ ॥

---

(१) वेमानौ वेमानः, वेम वेम्नी वेमनी वेमानि इत्यादि क्लीबेऽपि । (२) तन्तुः पुंसि क्लीबे च, तन्त्रमप्यत्र यदनेकार्थः "तन्त्रं सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः । अङ्गदे कुटुम्बकृत्ये च तन्तुवाये परिच्छदे । श्रुतिशाखान्तरे शास्त्रे करणे द्व्यर्थसाधके" इति । (३) रजकस्य द्वे, चर्मकारस्य द्वे । (४) षट् चर्मपादुकामात्रे । (५) "मोजा" "वुट्" इति इदानीं प्रसिद्धायां पादुकायामेकं । ( ६ ) त्वष्टारौ त्वष्टारः, काष्टतक्षौ काष्टतक्षः

ग्रामायत्तो ग्रामतक्षः[1] कौटतक्षोऽनधीनकः[2] ।
वृक्षभित्[1] तक्षणी[2] वासी[3] क्रकचं[1] करपत्रकम्[2] ॥ ५८२ ॥
स उद्घनो[1] यत्र काष्ठे काष्ठं निक्षिप्य तक्षते ।
वृक्षादनो[1] वृक्षभेदी[2] टङ्कः[1] पाषाणदारकः[2] ॥ ५८३ ॥
व्योकारः[1] कर्मारो[2] लोहकारः[3] कूटं[1] त्वयोघनः[2] ।
व्रश्चनः(१)[1] पत्रपरशु[2]रीषीका[1] तूलिके[2]षिका[3] ॥ ५८४ ॥
भक्ष्यकारः[1] कान्दविकः[2] कन्दु[1]स्वेदनिके[2] समे ।
रङ्गाजीव[1]स्तौलिकिक[2]श्चित्रकृ[3]च्चाथ तूलिका[1] ॥ ५८५ ॥
कूर्चिका[2] चित्र[1]मालेख्यं[2] पलगण्ड[1]स्तु लेप्यकृत्[2] ।
पुस्तं[1] लेप्यादिकर्म्म स्यान्नापित[1]श्चण्डिलः[2] क्षुरी[3] ॥ ५८६ ॥
क्षुरमर्द्दी[4] दिवाकीर्त्ति[5]र्मुण्डको[6]ऽन्तावसाय्य[7]पि ।
मुण्डनं[1] भद्राकरणं[2] वपनं[3] परिवर्पणम्(२)[4] ॥ ५८७ ॥
क्षौरं[5] नाराची[1] त्वेषिण्यौ[2] देवाजीव[1]स्तु देवलः[2] ।
मार्द्दङ्गिको[1] मौरजिको[2] वीणावाद[1]स्तु वैणिकः[2] ॥ ५८८ ॥
वेणुध्मः[1] स्याद्वैणविकः[2] पाणिघः[1] पाणिवादकः[2] ।

---

तक्षा तक्षाणौ तक्षाणः, वर्द्धकिः वर्द्धकी वर्द्धक्यः । (१) व्रश्चनः नागवल्लीपत्रच्छेदकमस्त्रमित्येके । (२) परिवापनम् इत्यपि ।

स्यात्प्रातिहारिको[1] मायाकारो[2] माया[1] तु (१)साम्बरी[2] ॥५८९॥
इन्द्रजालं[1] तु कुहकं[2] जालं[3] कुसृतिरित्यपि[4] ।
कौतूहलं[1] तु कुतकं[2] कौतुकं[3] च कुतूहलम्[4] ॥ ५९० ॥
व्याधो[1] मृगवधाजीवी[2] लुब्धको[3] मृगयुश्च[4] सः ।
पापर्द्धि[1]र्मृगया[2]खेटो[3] मृगव्यो[4]च्छोदने[5] अपि ॥ ५९१ ॥
जालिकस्तु[1] वागुरिको[2] वागुरा[1] मृगजालिका[2] ।
(२)शुम्बं[1] वराटको[2] रज्जुः[3] शुल्वं[4] तन्त्री[5] वटी[6] गुणः[7] ॥५९२॥
धीवरो[1] (३)दाश[2]कैवर्त्तौ[3] वडिशं[1] मत्स्यवेधनम्[2] ।
आनायस्तु[1] मत्स्यजालं[2] कुवेणी[1] मत्स्यबन्धनी[2] ॥ ५९३ ॥
जीवान्तकः[1] शाकुनिको[2] वैतं(४)सिकस्तु[1] सौनिकः[2] ।
मांसिकः[3] कौटिकश्चाथ[4] सूना[1] स्थानं वधस्य यत् ॥ ५९४ ॥
स्याद्बन्धनोपकरणं वीतंसो[1] मृगपक्षिणाम् ।
पाशस्तु[1] बन्धनग्रन्थि[2]रवपाता[1]वटौ[2] समौ ॥ ५९५ ॥

---

(१) "शाम्बरी" इत्यपि पाठः । (२) शुनति शुम्बं क्लीबे । तुम्बं तुम्बादय इति निपात्यते, वट्यते इति वटारः द्वारशृङ्गारेत्यारेनिपाते के प्रत्यये वटारकः । (३) दन्त्यवान् दासशब्दः सेवकार्थः । (४) वीतंसेन पक्षादिघातेन जीवति ।

उन्माथः[1] कूटयन्त्रं[2] स्याद्विवर्णस्तु[1] पृथग्जनः[2] ।
इतरः[3] प्राकृतो[4] नीचः[5] पामरो[6] बर्बरश्च[7] सः ॥ ५९६ ॥
चण्डालो[1]ऽन्तावसाय्य[2]न्तेवासि[3]श्वपच[4]बुक्कसाः[5] ।
निषाद[6]प्लव[7]मातङ्ग[8]दिवाकीर्ति[9]जनङ्गमाः[10] ॥ ५९७ ॥
पुलिन्दा[1] नाहला[2] निष्ट्याः[3] शबरा[4] वरुटा[5] भटाः[6] ।
साला[7] भिल्लाः[8] किराताश्च[9] सर्वेऽपि म्लेच्छजातयः ॥ ५९८ ॥

इत्याचार्य्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां मर्त्यकाण्डस्तृतीयः समाप्तः ॥ ३ ॥

# भूमिकाण्डः ।

भूर्[1]भूमिः[2] पृथिवी[3] पृथ्वी[4] वसुधो[5]र्वी[6] वसुन्धरा[7] ।
धात्री[8] धरित्री[9] धरणी[10] विश्वा[11] विश्वम्भरा[12] धरा[13] ॥ १ ॥
क्षितिः[14] क्षौणी[15] क्ष्मा[16]नन्ता[17] ज्या[18] कु[19]र्वसुमती[20] मही[21] ।
गौर्[22]गोत्रा[23] भूतधात्री[24] क्षमा[25] गन्धमाता[26]ऽचला[27]ऽवनिः[28] ॥ २ ॥
सर्वसहा[29] रत्नगर्भा[30] जगती[31] मेदिनी[32] रसा[33] ।
काश्यपी[34] पर्वताधारा[35] स्थिरे[36]ला[37] रत्न[38]-बीज(१)-सूः[39] ॥ ३ ॥
विपुला[40] सागराच्चाग्रे स्युर्नेमी[41]मेखला[42]म्बराः[43](२) ।
द्यावापृथिव्यौ[1] तु द्यावाभूमी[2] द्यावाक्षमे[3] अपि ॥ ४ ॥
दिवस्पृथिव्यौ[4] तु रोदस्यौ[5](३) रोदसी[6] रोदसी[7] च ते ।
उर्व्वरा सर्वसस्याभूरिरिणं[1] पुनरूषरम्[2] ॥ ५ ॥
स्थलं[1] स्थली[2] मरु[1]र्धन्वा(४) क्षेत्राद्यप्रहतं खिलम्[2] ।

---

(१) रत्नस्वौ रत्नस्वः, रत्नसूः ३८ वीजसूः ३९। (२) सागरनेमी ४१ सागरमेखला ४२ सागराम्बरा ४३ । (३) रोदस्यौ स्त्रीलिङ्गोऽयं द्विवचनान्तः सान्तः, इकारान्तः "रोदसी रोदसी च ते" इति द्वावपि द्विवचनान्तौ क्लीवस्त्रीलिङ्गौ सान्तः अकारान्तोऽपि। (४) धन्वानौ धन्वानः।

मृन्[1]मृत्तिका[2] सा क्षारोषो[1] मृत्सा[1] मृत्स्ना[2] च सा शुभा ॥६॥
रुमा[(1)][1] लवणखानिः स्यात् सामुद्रं[1] लवणं[2] हि यत् ।
तदक्षीवं[3] वशिरश्चै सैन्धवं[1] तु नदीभवम्[2] ॥ ७ ॥
माणिमन्थं[3] शीतशिवं[4] रौमकं[1] तु रुमाभवम्[2] ।
वसुकं[3] वसूकं[4] तच्च विड्[1]पाक्ये[2] तु कृत्रिमे[3] ॥ ८ ॥
सौवर्चल[1]ेऽक्षकं[2] रुचकं[3] दुर्गन्धं[4] शूलनाशनम्[5] ।
कृष्णे तु तत्र तिलकं[1] यवक्षारो[1] यवाग्रजः[2] ॥ ९ ॥
यवनालजः[3] ।पक्यश्चै पाचनकस्[1]तु टङ्कणः[2] ।
मालतीतीरजो[3] लोहश्[(2)][3]श्लेष्मणो[4] रसशोधनः[5] ॥ १० ॥
समास्तु स्वर्जिकाक्षार[1]कापोत[2]सुखवर्चकाः[3] ।
स्वर्जिस्[1]तु स्वर्जिका[2] स्तुग्घ्नी[3] योगवाही[4] सुवर्चिका[5] ॥ ११ ॥
भरता[1]न्यैरावतानि[2] विदेहाश्च[3] कुरून् विना ।
वर्षाणि कर्मभूम्यः[1] स्युः शेषाणि फलभूमयः[1] ॥ १२ ॥
वर्षं[1] वर्षधराङ्क्यङ्कं[2] विषय[1]स्तूपवर्त्तनम्[2] ।
देशो[1] जनपदो[2] नीवृत्[(3)][3] राष्ट्रं[4] निर्गश्च[5] मण्डलम्[6] ॥ १३ ॥

---

(१) रुमाणौ रुमाणः, अथवा रुमा स्त्री आकारान्तः (२) लोहं हेमादि श्लिष्यतेऽनेन लौहश्लेष्मणः । (३) नीवृतौ नीवृतः स्त्रियाम् ।

आर्य्यावर्त्तो[1] जन्मभूमिर्जिनचक्रयर्द्धचक्रिणाम् ।
पुण्यभू[2]राचारवेदी[3] मध्यं विन्ध्यहिमागयोः ॥ १४ ॥
गङ्गायमुनयोर्मध्यमन्तर्वेदिः[1] समस्थली[2] ।
ब्रह्मावर्त्तः[1] सरस्वत्या दृषद्वत्याश्च मध्यतः ॥ १५ ॥
ब्रह्मवेदिः[1] कुरुक्षेत्रे पञ्चरामह्रदान्तरम् ।
धर्मक्षेत्रं[1] कुरुक्षेत्रं[2] द्वादशयोजनावधि ॥ १६ ॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः[1] स मध्यमः[2] ॥ १७ ॥
देशः प्राग्दक्षिणः प्राच्यो[1] नदीं यावच्छरावतीम् ।
पश्चिमोत्तरस्तूदीच्यः[1] प्रत्यन्तो[1] म्लेच्छमण्डलः ॥ १८ ॥
पाण्डूदक्कृष्णतो भूमः[(1)3] पाण्डूदक्-कृष्णमृत्तिके ।
जङ्गलो[1] निर्जलो[1]ऽनूपो[1]ऽम्बुमान् कच्छस्तु[1] तद्विधः[(2)] ॥ १९ ॥
कुमुद्वान्[1] कुमुदावासो वेतस्वान्[1] भूरिवेतसः ।
नडप्रायो[1] नडकीयो[2] नड्वांश्च[3] नड्वलश्च[4] सः ॥ २० ॥
शाड्वलः[(3)1] शादहरिते देशो नद्यम्बुजीवनः ।

---

(१) पाण्डुभूमः १ उदग्भूमः २ कृष्णभूमः ३ । (२) तद्विधोऽनूपप्रायः । (३) "शाद्वल" इत्यपि ।

स्यान्नदीमातृको[1] देवमातृको[1] वृष्टिजीवनः ॥ २१ ॥
प्राग्ज्योतिषाः[1] कामरूपा[2] मालवाः[1] स्युरवन्तयः[2] ।
त्रैपुरास्तु[1] डाहलाः[2] स्युश्चैद्यास्ते[1] चेदयश्च[2] ते ॥ २२ ॥
वङ्गास्तु[1] हरिकेलीया[2] अङ्गाश्च[1]म्पोपलक्षिताः ।
साल्वास्तु[1] कारकुक्षीया[2] मरवस्तु[1] दशेरकाः[2] ॥ २३ ॥
जालन्धरा[1]स्त्रिगर्त्ताः[2] स्युस्तायिका[1]स्तर्जिका[2]भिधाः ।
कश्मीरास्तु[1] माधुमताः[2] सारस्वता[3] विकर्णिकाः[4] ॥ २४ ॥
वाहिका[1]ष्टक्क[2]नामानो वाह्लीका[1] वाह्लिका[2]ह्वयाः ।
तुरुष्का[1]स्तु सारवयः[2] स्युः कारुषा[1]स्तु वृहद्गृहाः[2] ॥ २५ ॥
लम्पाका[1]स्तु मुरण्डाः[2] स्युः सौवीरा[1]स्तु कुमालकाः[2] ।
प्रत्यग्रथा[1]स्त्वहिच्छत्राः[2] कीकटा[1] मगधा[2]ह्वयाः ॥ २६ ॥
उ(१)ण्ड्राः[1] केरल[2]पर्य्यायाः कुन्तला[1] उपहालकाः[2] ।
ग्रामस्तु[1] वसथः[2] स-न्नि-प्रति-पर्य्युप-न्तैः[6](२)परैः ॥ २७ ॥
पाटक[1]स्तु तदर्द्धे स्यादाघाट[1]स्तु घटो[2]ऽवधिः[3] ।
अन्तो[4]ऽवसानं[5] सीमा[6] च मर्य्यादा[7]पि च सीमनि[8] ॥ २८ ॥

---

(१) "उत्कल" इति प्रसिद्धायाम् । (२) संवसथः २ निवसथः ३ प्रतिवसथः ४ परिवसथः ५ उपवसथः ६ ।

ग्रामसीमा तूपशल्यं[1] मालं[1] ग्रामान्तराटवी ।
पर्य्यन्तभूः परिसरः स्यात्कर्मान्त[1]स्तु कर्म्मभूः ॥ २९ ॥
गोस्थानं[1] गोष्ठमेत[2]त्तु गौष्ठीनं[1] भूतपूर्वकम् ।
तदाशितं गवीनं[1] स्याद्गावो यत्राशिताः पुरा ॥ ३० ॥
क्षेत्रे तु वप्रः[1] केदारः[2] सेतौ[1] पाल्या[2]लि[3]सम्बराः ।
क्षेत्रं तु शाकस्य शाकशाकटं[1] शाकशाकिनम्[2] ॥ ३१ ॥
व्रैहेयं[1] शालेयं[1] षष्टिक्यं[1] कौद्रवीण[1]मौद्गीने[1] ।
व्रीह्यादीनां क्षेत्रेऽणव्यं[1] तु स्यादाणवीन[2]मणोः ॥ ३२ ॥
भङ्ग्यं[1] भाङ्गीन[2]मौमीन[1]मुम्यं[2] यव्यं[1] यवक्य[2]वत् ।
तिल्यं[1] तैलीनं[2] माषीणं[1] माष्यं[2] भङ्गादिसम्भवम् ॥ ३३ ॥
शीत्यं[1] हल्यं[2] त्रिहल्यं[1] तु त्रिसीत्यं[2] त्रिगुणाकृतम्[3] ।
तृतीयाकृतं[4] द्विहल्या[5]द्येवं शम्बाकृतं[6] च तत् ॥ ३४ ॥
बीजाकृतं[1] तूप्तकृष्टं[2] द्रौणिका[1]ढकिका[1]दयः(१) ।
स्युर्द्रोणाढक(२)वापादौ खलधानं[1] पुनः खलम्(३)[1] ॥ ३५ ॥

---

(१) आदिना खारीकादयो गृह्यन्ते । (२) उप्यतेऽस्मिन्निति वापः क्षेत्रं द्रोणाढकयोर्वापः द्रोणाढकवापः स आदिर्यस्य स तथा आदिशब्दात् द्रोणं पचति सम्भवत्यवहरति वा द्रौणिकः कटाहः द्रौणिकी स्थाली एवं आढकिकः कटाहः आढकिकी स्थाली इत्याद्याः । (३) खलं त्रिपु ।

चूर्णे[1] क्षोदो[2]ऽथ रजांसि(1)[1] स्युर्धूली[2]पांशु(2)[3]रेणवः[4] ।
लोष्टे[1] लोष्टु[2]र्दलि[3]र्लेष्टु[4]र्वल्मीकः[1] कृमिपर्वतः[2] ॥ ३६ ॥
वम्रीकूटं(3)[3] वामलूरो[4] नाकुः[5] शक्रशिरश्च[6] सः ।
नगरी[1] पूः पुरी[3] द्रङ्गः[4] पत्तनं[5] पुटभेदनम्[6] ॥ ३७ ॥
निवेशन[7]मधिष्ठानं[8] स्थानीयं[9] निगमोऽपि[10] च ।
शाखापुरं[1] तूपपुरं[2] खेटः[1] पुरार्द्धविस्तरः[2] ॥ ३८ ॥
स्कन्धावारो[1] राजधानी[2] कोट्ट[1]दुर्गे[2] पुनः समे ।
गयापूर्[1]गयराजर्षेः[2] कन्यकुब्जं[1] महोदयम्[2] ॥ ३९ ॥
कन्याकुब्जं[3] गाधिपुरं[4] कौशं[5] कुशस्थलं[6] च तत् ।
काशि[1]र्वाराणसी[2] वाराणसी[3] शिवपुरी[4] च सा ॥ ४० ॥
साकेतं[1] कोशला[2]ऽयोध्या[3] विदेहा[1]मिथिले[2] समे ।
त्रिपुरी[1] चेदिनगरी[2] कौशाम्बी[1] वत्सपत्तनम्[2] ॥ ४१ ॥
उज्जयिनी(4)[1] स्याद्विशाला[2]ऽवन्ती[3] पुष्पकरण्डिनी[4] ।

---

(१) अकारान्तोऽपि रजः । (२) पांसुः दन्त्य-पञ्चमस्वरान्तः तालव्यान्तोऽपि । (३) कूटं पुंसि क्लीबे च । (४) उत्कर्षेण जयत्युज्जयिनी रम्यादित्वादनट्, अन्ये तु उज्जयिनी नाम राक्षसी देवता तस्या निवास उज्जयिनीति चातुरार्थकमणमुत्पाद्य तस्य लोपमिच्छन्ति ।

पाटलिपुत्रं[1] कुसुमपुरं[2] चम्पा[1] तु मालिनी[2] ॥ ४२ ॥
लोम(1)पादकर्णयोः पूर्देवीकोटं[1] उमावनम्[2] ।
कोटीवर्षं[3] बाणपुरं[4] स्याच्छोणितपुरं[5] च तत् ॥ ४३ ॥
मथुरा[1] तु मधूपघ्नं[2] मधुरा[1]ऽथ गजाह्वयम्[1] ।
स्याद्धास्तिनपुरं[2] हस्तिनीपुरं[3] हस्तिनापुरम्[4] ॥ ४४ ॥
ता(2)मलिप्तं[1] दामलिप्तं[2] तामलिप्ती[3] तमालिनी[4] ।
स्तम्बपूर्[5]विष्णुगृहं[6] च स्याद्विदर्भा[1] तु कुण्डिनम्[2] ॥ ४५ ॥
द्वारावती[1] द्वारका[2] स्यात् निषधा[1] तु मलस्य पूः ।
प्राकारो[1] वरणः[2] साले[3] चयो[1] वप्रो[2]ऽस्य पीठभूः ॥ ४६ ॥
प्राकाराग्रं[1] कपिशीर्षं[2] क्षौमा[1]ट्टो[2]ट्टालकाः[3] समाः ।
पूर्द्वारे[1] गोपुरं[2] रथ्या[1]प्रतोली[2]विशिखाः[3] समाः ॥ ४७ ॥
परिकूटं[1] हस्तिनखो[2] नगरद्वारकूटके ।
मुखं[1] निःसरणे[2] वाटे[1] प्राचीना[2]वेष्टकौ[3] वृतिः[4] ॥ ४८ ॥
पदव्ये[1]कपदी[2] पद्या[3] पद्धति[4]र्वर्त्म[5] वर्त्तनी[6] ।
अयनं[7] सरणि[8]र्मार्गो[9]ऽध्वा[10] पन्था[11] निगमः[12] सृतिः[13] ॥ ४९ ॥

---

(१) लोमपादपूः २ कर्णपूः ४ । (२) ताम्रलिप्तमिति वा ।

सत्पथे[1] (१)स्वतितः पन्था[3] अपन्था[1] (२)अपथं[2] समे ।
व्यध्वो[1] दुरध्वः[2] कदध्वा[3] विपथं[4] कापथं[5] च सः ॥ ५० ॥
प्रान्तरं[1] दूरशून्योऽध्वा कान्तारो[1] वर्त्म दुर्गमम् ।
(३)सुरङ्गा[1] तु सन्धिला[2] स्याद्गूढ(४)मार्गो भुवोऽन्तरे ॥ ५१ ॥
चतुष्पथे[1] तु संस्थानं[2] चतुष्कं[3] त्रिपथे[1] त्रिकम्[2] ।
द्विपथं[1] तु चारुपथो[2] गजाद्यध्वा त्वसङ्कुलः[1] ॥ ५२ ॥
घण्टापथः[1] संसरणं[2] श्रीपथो[3] राजवर्त्म च[4] ।
उपनिःक्रमणं[5] चोपनिष्करं[6] च महापथः[7] ॥ ५३ ॥
विपणिस्तु[1] वणिग्मार्गः[2] स्थानं[1] तु पद[2]मास्पदम्[3] ।
श्लेषस्त्रिमार्ग्याः शृङ्गाटं[1] बहुमार्गी तु चत्वरम्[1] ॥ ५४ ॥
श्मशानं[1] (५)करवीरं[2] स्यात् पितृ(६)-प्रेताद्वनं[4] गृहम्[6] ।

---

(१) सुपन्थाः २ अतिपन्थाः ३ सुपन्थानौ सुपन्थानः अतिपन्थानौ अतिपन्थानः द्वौ नान्तौ पुंसि । (२) अपथे अपथानि, अकारान्तः क्लीबे । (३) सरत्यनया सुरङ्गा सन्तेः सर्वेत्युङ्गः । (४) गूढवर्त्मनि भूमध्ये तु षुकारास्ता दन्त्यतालव्यपूर्वगा सुरुङ्गा इति शब्दरत्नाकरशब्दभेदः । (५) करवीरः पुंसि क्लीबे च । (६) पितृवनम् ३ पितृगृहम् ४ प्रेतवनं ५ प्रेतगृहम् ६ ।

गेह[१]भूर्वा[२]स्तु गेहं[१] तु गृहं[२] वेश्म[३] निकेतनम्[४] ॥ ५५ ॥
मन्दिरं[५] सदनं[६] सद्म[७] निकाय्यो[८] भवनं[९] कुटः[१०] ।
आलयो[११] निलयः[१२] शाला[१३] सभो[१४]दवसितं[१५] कुलम्[१६] ॥ ५६ ॥
धिष्ण्य[१७]मावसथः[१८] स्थानं[१९] पस्त्यं[२०] संस्त्याय[२१] आश्रयः[२२] ।
ओको[(१)२३] निवास[२४] आवासो[२५] वसतिः[२६] शरणं[२७] क्षयः[२८] ॥ ५७ ॥
धामा[२९]गारं[३०] निशान्तं[३१] च कुट्टिमं[१] त्वस्य बद्धभूः ।
चतुःशालं[१] सञ्जवनं[२] सौधं[१] तु नृपमन्दिरम् ॥ ५८ ॥
उपकारिको[१]पकार्य्या[२] सिंहद्वारं[१] प्रवेशनम्[२] ।
प्रासादो[१] देवभूपानां हर्म्यं[२] तु धनिनां गृहम् ॥ ५९ ॥
मठा[१]वसथ्या[२]वसथाः[३] स्युश्छात्रव्रतिवेश्मनि ।
पर्णशालो[१]टजे[२]श्चैत्य[१]विहारौ[२] जिनसद्मनि[२] ॥ ६० ॥
गर्भागारे[१]ऽपवरको[२] वासौकः[३] शयनास्पदम्[४] ।
भाण्डागारं[१] तु कोशः[२] स्यात् चन्द्रशाला[१] शिरोगृहम्[२] ॥६१॥
कुप्यशाला[१] तु सन्धानी[२] कायमानं[१] तृणौकसि[२] ।
होत्रीयन्तु[१] हविर्गेहं[२] प्राग्वंशः प्राग्हविर्गृहात् ॥ ६२ ॥

---

(१) ओकसी ओकांसि ।

आथर्वणं शान्तिगृहमास्था(१)नगृहमिन्द्रकम् ।
तैलिशाला यन्त्रगृहमरिष्टं सूतिकागृहम् ॥ ६३ ॥
सूदशाला रसवती पाकस्थानं महानसम् ।
हस्तिशाला तु चतुरं वाजिशाला तु मन्दुरा ॥ ६४ ॥
सन्दानिनी तु गोशाला चित्रशाला तु जालिनी ।
कुम्भशाला पाकपुटी तन्तुशाला तु गर्त्तिका ॥ ६५ ॥
नापितशाला वपनी शिल्पा(२) खुरकुटी च सा ।
आवेशनं शिल्पिशाला सत्रशाला प्रतिश्रयः ॥ ६६ ॥
आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः ।
प्रपा पानीयशाला स्यात् गञ्जा तु मदिरागृहम् ॥ ६७ ॥
प(३)क्कणः शबरावासो घोषस्त्वाभीर(४)पल्लिका ।
पण्यशाला निषद्याऽट्टो हट्टो विपणिरापणः ॥ ६८ ॥
वेश्याश्रयः पुरं वेशो मण्डपस्तु जनाश्रयः ।
कुड्यं भित्तिस्तदेडूकमन्तर्निहतकीकसम् ॥ ६९ ॥
वेदी वितर्दिरजिरं प्राङ्गणं चत्वराङ्गणे ।

---

(१) सभागृहस्य । (२) विशल्या इति पाठः । (३) पक्कणः द्विककारमध्योऽयम् । (४) आभीराणां गोपानां पल्लिर्गृहावली आभीरपल्लिका ।

बलजं[1] प्रतीहारो[2] द्वा(१)[2]र्द्वारे[3]ऽर्थे परिघो[1]र्गलो[2] ॥ ७० ॥
साल्पा त्वर्गलिका[1] सूचिः[2] कुञ्चिकायान्तु कूचिका[2] ।
साधारण्यं[3] कुट[4]श्चासौ वारयन्त्रं[1] तु तालकम्[2] ॥ ७१ ॥
अस्योद्घाटनयन्त्रन्तु ताल्य[1]पि प्रतिपाल्य[2]पि ।
तिर्य्यग्द्वारोर्द्धदारूत्तरङ्गं[1] स्यादररं[1] पुनः ॥ ७२ ॥
कपाटो[2]ऽररिः[3] कुवाटः[4] पक्षद्वारं[1] तु पक्षकः[2] ।
प्रच्छन्न[1]मन्तर्द्वारं[2] स्याद् बहिर्द्वारं[1] तु तोरणम्[2] ॥ ७३ ॥
तोरणोर्द्ध्वे तु मङ्गल्यं दाम वन्दनमालिका[1] ।
स्तम्भादेः स्यादधोदारौ शिला[1] नासोर्द्ध्वदारुणि ॥ ७४ ॥
गोपानसी[1] तु वलभीच्छादने वक्रदारुणि ।
गृहावग्रहणी[1] देहल्यु[3]म्बरो[3]दुम्बरो[3]ऽम्बुरः[3] ॥ ७५ ॥
प्रघा(२)णः[1] प्रघणो[3]ऽलिन्दो[2] बहिर्द्वारप्रकोष्ठके ।

---

(१) द्वारौ द्वारः रान्तः। द्वारमकरान्तः। तोरणोऽस्त्रीबहिर्द्वारमित्यमरः।
(२) "वेश्मैकदेशः प्रघणः प्रघाणः स्यादलिन्दकः" इति हलायुधः। "शुष्काङ्गनीलोत्पलनिर्मितानां लिप्तेषु भासा गृहदेहलीनां। यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि" इति शिशुपालवधे।

कपोतपाली[1] (१)विटङ्कः[2] पटल(२)च्छदिषी[2] समे ॥ ७६ ॥
नीध्रं[1] वलीकं[2] तत्प्रान्त इन्द्रकोश[1]स्तमङ्ककः[2] ।
वलभी[1] (३)छदिराधारो नागदन्तास्तु[1] दन्तकाः[2] ॥ ७७ ॥
(५)मत्तालम्बो[1]ऽपाश्रयः[2] स्यात् प्रग्रीवो[3] मत्तवारणे[4] ।
वातायनो[1] गवाक्षश्च[2] जालके[3]ऽथान्नकोष्ठकः[1] ॥ ७८ ॥
कुसूलो[2]ऽश्रिस्तु[1] कोणो[2]ऽणिः[3] कोटिः[4] पाल्य[5]स्रे[6] इत्यपि ।
आरोहणं[1] तु सोपानं[2] निःश्रेणि[1]स्त्वधिरोहिणी[2] ॥ ७९ ॥
स्थूणा[1] स्तम्भः[2] शालभञ्जी[1] पाञ्चालिका[2] च पुत्रिका[3] ।
काष्ठादिघटिता लेप्यमयी त्वञ्जलिकारिका[1] ॥ ८० ॥

---

(१) "विटङ्कं पुंनपुंसकम्" इत्यमरः, वलभ्यधोभागे कृत्रिमपक्षिस्थानमिति हलायुधटीका । (२) छदिः छदिषी छर्दीपि । (३) छदिषो गृहाच्छादनस्याधारः छदिराधारः कचित् सुधा, कचित् तृणानि, क्वचित् मृत्तिका तदाधारभूतं वंशपञ्जरादि, "आच्छादनं स्याद्वलभीगृहाणाम्" इति हलायुधः, वरण्डिकायां गृहोपरिस्थितभूमिकाया वा वलभीति तट्टीका । वलभिः गृहोपरिकुटिः पटलाधारश्च वंशपञ्जर इति लिङ्गानुशासनटीका । "तां कस्याचिद् भुवनवलभौ सुप्तपारावतायाम्" इति मेघदूते, भुवनानां वेश्मनां वलभिरुपरितनभूमिस्तस्यामिति तट्टीका । (४) दन्तकाः गृहान्निर्गतकाष्ठं "खुंटी"ति ख्यातम् । (५) प्रासादवीथीनामावरणस्य ।

नन्द्यावर्त्तप्रभृतयो विच्छन्दा आढ्यवेश्मनाम्[(1)] ।
समुद्गः सम्पुटः पेटा स्यान्मञ्जूषाऽथ शोधनी ॥ ८१ ॥
सम्मार्ज्जनी बहुकरी वर्द्धनी च समूहनी ।
सङ्करावकरौ[(2)] तुल्यावुदूखलमुलूखलम् ॥ ८२ ॥
प्रस्फोटनं[(3)] तु पवनमवघातस्तु कण्डनम् ।
कटः किलिञ्जो मुसलोऽयोग्रं कण्डोलकः पिटम् ॥ ८३ ॥
चालनी तितउः[(4)] सूर्पं प्रस्फोटनमथान्तिका ।
चुल्यश्मन्तकमुद्धानं स्यादधिश्रयणी च सा ॥ ८४ ॥
स्थाल्युखा पिठरं कुण्डं चरुः कुम्भी घटः पुनः ।
कुटः कुम्भः करीरश्च कलशः कलसो निपः ॥ ८५ ॥
हसन्य[(5)]ङ्गाराच्छकटी-धानी-पात्री हसन्तिका ।
भ्राष्ट्रोम्बरीषमृचीषमृजीषं पिष्टपाकभृत् ॥ ८६ ॥

---

(१) आढ्यवेश्मनां नन्द्यावर्त्तप्रभृतयो विच्छन्दा रचनाविशेषाः प्रभृतिग्रहणात् स्वस्तिकसर्वतोभद्राद्याः यथा शब्दरत्नावल्यां "नन्द्यावर्त्तः स्वस्तिकः स्यात् सर्वचित्रविचित्रकौ । विच्छन्दको वर्द्धमानस्तरीमण्डल इत्यपि । रुचकच्छत्रकाद्याश्च भेदा ईश्वरसद्मनाम्" इति । (२) अवस्करोऽपि । (३) निर्वुसीकरणं तुषादिशोधनम् । (४) तितउ तितउनी तितऊनि इति क्लीबेऽपि । (५) अङ्गारशकटी २ अङ्गारधानी ३ अङ्गारपात्री ४ ।

कम्बिर्दर्विः खजाकोथ स्याच्चदूर्दारुहस्तकः ।
वार्द्धान्यां तु गलन्त्यालूः कर्करी (१)करकोऽथ सः ॥ ८७ ॥
नालिकेरजः करङ्कस्तुल्यौ कटाह(२)कर्प्परौ ।
मणिकोऽलिञ्जरो गर्गरीकलश्यौ तु (३)मन्थनी ॥ ८८ ॥
वैशाखः खजको मन्थो मन्थानो(४) मन्थदण्डकः ।
मन्थः क्षुब्धोऽस्य विष्कम्भो मञ्जीरं कुटरोऽपि च ॥ ८९ ॥
शालाजिरो वर्द्धमानः शरावः (५)कोशिका पुनः ।
मल्लिका चषकः कंसः पारी स्यात्पानभाजनम् ॥ ९० ॥
कुतूश्चर्म्मस्नेहपात्रं कुतुपस्तु तदल्पकम् ।
दृतिः खल्लिश्चर्म्ममयी त्वालुः करकपात्रिका ॥ ९१ ॥
सर्वमावपनं भाण्डं पात्रामत्रे तु भाजनम् ।
तद्विशालं पुनः स्थालं स्यात्पिधानमुदञ्चनम् ॥ ९२ ॥
शैलोऽद्रिः शिखरी शिलोच्चयगिरी गोत्रोऽचलः सानु(६)मान्
(७)ग्रावा पर्व्वतभूध्रभूधरधराहार्या नगोऽथोदयः ।

---

(१) कररोऽथ सः इति वा पाठः । (२) एतौ कटाहकर्परौ घटादिखण्डेऽपि वर्त्तेते । (३) मन्थिनी इति वा पाठः । (४) मन्थानौ मन्थान इति रूपं । (५) कौशिका इत्यपि । (६) सानुमन्तौ सानुमन्तः । (७) ग्रावाणौ ग्रावाणः ।

पूर्वाद्रिश्चरमाद्रिरस्तं उदगद्रिस्त्वद्रिराण्मेनका
प्राणेशो हिमवान् हिमालयो हिमप्रस्थो भवानीगुरुः ॥९३॥
हिरण्यनाभो मैनाकः सुनाभश्च तदात्मजः ।
रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥ ९४ ॥
क्रौञ्चः क्रुञ्चोऽथ मलय आषाढो दक्षिणाचलः ।
स्यान्मा[(१)]ल्यवान् प्रस्रवणो विन्ध्यस्तु जलवालकः ॥ ९५ ॥
शत्रुञ्जयो विमलाद्रिरिन्द्रकीलस्तु मन्दरः ।
सुवेलः स्यात् त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ॥ ९६ ॥
उज्जयन्तो रैवतकः सुदारुः पारियात्रिकः ।
लोकालोकश्चक्रवालोऽथ मेरुः कर्णिकाचलः ॥ ९७ ॥
रत्नसानुः सुमेरुः स्वः-[(२)]स्वर्गि-काञ्चनतो गिरिः ।
शृङ्गं तु शिखरं कूटं प्रपातस्त्वतटो भृगुः ॥ ९८ ॥
मेखला मध्यभागोऽद्रेर्नितम्बः कटकश्च सः ।
दरी स्यात्कन्दरोऽखातबिले तु गह्वरं गुहा ॥ ९९ ॥
द्रोणी तु शैलयोः सन्धिः पादाः पर्यन्तपर्वताः ।

---

(१) माल्यवन्तौ माल्यवन्तः । (२) स्वर्गिरिः ९ स्वर्गिगिरिः ६ काञ्चनगिरिः ७ ।

दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः ॥ १०० ॥
अधित्यको[१]र्द्धभूमिः स्यादधोभूमिरुपात्यका[१] ।
स्नुः[१] प्रस्थं[२] सानु[३]रश्मा[१] तु पाषाणः[२] प्रस्तरो[३] दृषद्[(१)४] ॥१०१॥
ग्रावा[५] शिलो[६]पलो[७] गण्डशैलाः[१] स्थूलोपलाश्च्युताः ।
स्यादाकरः[१] खनिः[२] खानि[३]र्गञ्जो[४] धातुस्तु[१] गैरिकम्[२] ॥ १०२ ॥
शुक्लधातौ[१] पाकशुक्ला[२] कठिनी[३] खटिनी[४] खटी[५] ।
लोहं[१] कालायसं[२] शस्त्रं[३] पिण्डः[४] पारशवं[५] घनम्[६] ॥ १०३ ॥
गिरिसारं[७] शिलासारं[८] तीक्ष्ण[९]कृष्णामिषे[१०] अयः[११] ।
सिंहान[१]-धूर्त्त[२]-मण्डूर[३]-सरणा[४]न्यस्य किट्टके ॥ १०४ ॥
सर्वं च तैजसं लोहं[(२)१] विकारस्त्वयसः कुशी[१] ।
ताम्रं[१] म्लेच्छ[(३)]मुखं[२] शुल्वं[३] रक्तं[४] द्व्यष्ट[५]मुदुम्बरम्[६] ॥१०५॥
म्लेच्छ[७]शावरभेदाख्यमर्कटास्यं[९] कनीयसम्[१०] ।
ब्रह्मवर्द्धनं[११] वरिष्ठं[१२] सीसं[१] तु सीसपत्रकम्[२] ॥ १०६ ॥
नागं[३] गण्डूपदभवं[४] वप्रं[५] सिन्दूरकारणम्[६] ।

---

(१) दृषदौ दृषदः । (२) "सुवर्णं १ रजतं २ ताम्रं ३ रीतिः ४ कांस्यं ५ तथा त्रपु ६ । सीसं ७ च धीवरं ८ चैव अष्टौ लोहानि वक्षते" इति ॥ (३) शवरभेदाख्यम् इति वा ।

(१)७ वध्रं स्वर्णारि[८]योगेष्टे[९] यववेष्टं[१०] सुवर्णकर्म[११] ॥ १०७ ॥

वङ्गं[१] (२)त्रपुः[२] स्वर्णजं[३] नागजीवने[४]

मृदङ्ग[५]रङ्गे[६] गुरुपत्र[७]पिच्चटे[८] ।

स्याच्चक्रसंज्ञं[९] तमरं[१०] च नागजं[११]

कस्तीर[१२]मालीन[१३]कसिंहले[१४] अपि ॥ १०८ ॥

स्याद्रूप्यं[१] कलधौत[२]तार[३]रजत[४]श्वेतानि[५] दुर्वर्णकं[६]

खर्जूरं[७] च हिमांशु(३)हंसकुमुदाभिख्यं[१०] सुवर्णं[१] पुनः ।

स्वर्णं[२] हेम(४)[३] हिरण्य[४]हाटक[५]वसून्य[६]ष्टापदं[७] काञ्चनं[८]

कल्याणं[९] कनकं[१०] महारजत[११]गाङ्गेय[१२]रुक्म[१३]माण्यपि[१४] ॥ १०९ ॥

कलधौत[१५]लोहोत्तम[१६]वह्निबीजा[१७]

न्यपि गारुडं[१८] गैरिक[१९]जातरूपे[२०] ।

तपनीय[२१]चामीकर[२२]चन्द्र(५)[२३]भर्म्मा-[२४]

---

(१) वर्ध्रं इति वा । (२) त्रपुषी त्रपूंषि उकारान्तोऽपि त्रपु त्रपुणी त्रपूणि । (३) हिमांशुहंसकुमुदानामभिख्या नाम यस्य तत् तथा चन्द्राह्वयं ८ हंसाह्वयं ९ कुमुदाह्वयं १० इत्यादि योज्यं । (४) हेम हेम्नी हेमनी हेमानि नान्तः क्वचिदकारांतोऽपि तदा कुलवद्रूपाणि । (५) भर्म्म भर्म्मणी भर्म्माणि नान्तः अकारान्तत्वे कुलवत् भर्म्मं भर्म्मे भर्म्माणि ।

ऽर्जुन[25]निष्क[26]कार्त्तस्वर[27]कर्बुराणि[28] ॥ ११० ॥
जाम्बूनदं[29] शातकुम्भं[30] रजतं[31] भूरि[32] भूत्तमम्[33] ।
हिरण्य[1]कोश[2(1)]कुप्यानि[3] हेम्नि रूप्ये कृताकृते ॥ १११ ॥
कुप्यं[(2)] तु तद्द्वयादन्यद्रूप्यं[(3)] तु द्वयमाहतम् ।
अलङ्कारसुवर्णं[1] तु शृङ्गी[2]कनक[3]मायुधम् ॥ ११२ ॥
रजतं च सुवर्णं च संश्लिष्टे घनगोलकः[1] ।
पित्तल[1]ोरे[2]ऽथारकूटः[1] कपिलोहं[2] सुवर्णकम्[3] ॥ ११३ ॥
रिरी[4] रीरी[5] च रीति[6]श्च पीतलोहं[7] सुलोह[(5)]कम्[8] ।
ब्राह्मी[1] तु राज्ञी[2] कपिला[3] ब्रह्मरीति[4(6)]र्महेश्वरी[5] ॥ ११४ ॥
कांस्ये[1]विद्युत्प्रियं[2] घोषः[(7)3] प्रकाशं[4] वङ्गशुल्वजम्[5] ।
घण्टाशब्द[6]मसुराह्वं[7] रवणं[8] लोहजं[9] मलम्[10] ॥ ११५ ॥
सौराष्ट्रके[1] पञ्च[(8)]लोहं[2] वर्त्तलोहं[1] तु वर्त्तकम्[2] ।

---

(१) सामान्येन द्रव्याभरणाद्युत्कृष्टधनस्य, घटिताघटितहेमरूप्ययोः कुप्यं । (२) द्वयं कुप्यमकुप्यं च आहतं ताडितं रूप्यं स्यात् (३) आहतरूप्योत्पन्नो लोके "रूपैया" इति ख्यातः । तथा "पैसा" इति अन्यः । (४) "कुन्दन" इति प्रसिद्धः । (५) पित्तलभेदस्य सुवर्णसदृशस्य । (६) पीतरक्तपित्तलस्य । (७) घोष इति अतिशुद्धकांस्यम् । (८) पञ्च ताम्ररीतित्रपुसीसककलायसलक्षणानि लोहानि यस्मिन् । कांस्यभेदः ।

पारदः[1] पारतः[2] सूतो[3] हरबीजं[4] रस[5]श्चलम्[6] ॥ ११६ ॥
अभ्रकं[1] स्वच्छपत्रं[2] (१)खं[3]मेघाख्यं[4] गिरिजामले[5] ।
स्रोतोञ्जनं[1] तु कापोतं[2] सौवीरं[3] कृष्णयामुने[5] ॥ ११७ ॥
अथ तुल्यं[1] शिखिग्रीवं[2] तुत्थाञ्जन[3]मयूरके[4] ।
मूषातुत्थं[1] कांस्यनीलं[2] हेमतारं[3] वितुन्नकम्[4] ॥ ११८ ॥
स्यात्तु कर्परिकातुत्थ[1]ममृतासङ्ग[2]मञ्जनम्[3] ।
रसगर्भं[1] तार्क्ष्यशैलं[2] तुत्थे दार्वीरसोद्भवे ॥ ११९ ॥
पुष्पाञ्जनं[1] रीतिपुष्पं[2] पौष्पकं[3] पुष्पकेतु[4] (२)च ।
माक्षिकं[1] तु कदम्बः[2] स्यात् चक्रनामा[3]ऽजनामकः[4] ॥१२०॥
ताप्यो[1] नदीजः[2] कामारि[3]स्तारा[4]रिर्विटमाक्षिकः[5] ।
सौराष्ट्री[1] पार्वती[2] काक्षी[3] कालिका[4] पर्पटी[5] सती[6] ॥१२१॥
आढकी[7] तुवरी[8] कंसोद्भवा[9] काच्छी[10] मृदा(३)ह्वया[11] ।
कासीसं[1] धातुकासीसं[2] खेचरं[3] धातुशेखरम्[4] ॥ १२२ ॥

---

(१) खस्याकाशस्याभिख्याऽस्य तेन खं गगनं इत्यादिशब्देन बोध्यं तथा मेघाख्यं मेघः अम्बुदः इत्यादिशब्देन ग्राह्यं गिरिजामले इति सप्तम्येकवचनान्तम् । (२) पुष्पकं पुष्पकेतु इति नामद्वयमपि पदच्छेदभेदात्साधु क्लीबे । (३) मृदः आह्वयो यस्यास्तेन मृत्तिका मृत्सा मृत्स्ना इत्यादि ।

द्वितीयं पुष्पिकासीसं[1] कंसकं[2] नयनौषधम्[3] ।
गन्धाश्मा[1] (1)शुल्व[2]पामा[3]-कुष्ठारि[4]र्गन्धिक[5]गन्धकौ[6] ॥ १२३ ॥
सौगन्धिक[7]ः शुकपुच्छो[8] हरितालं[1] तु पिञ्जरम्[2] ।
बिडालकं[3] विस्रगन्धि[4] खर्जूरं[5] वंशपत्रकम्[6] ॥ १२४ ॥
आल[7]पीतन[8]तालानि[9] गोदन्तं[10] नटमण्डनम्[11] ।
वङ्गारि[12]र्लोमहृच्चा[13]थ मनोगुप्ता[1] मनःशिला[2] ॥ १२५ ॥
करवीरा[3] नागमाता[4] रोचनी[5] रसनेत्रिका[6] ।
(2)नेपाली[7] कुनटी[8] गोला[9] मनोह्वा[10] नागजिह्विका[11] ॥ १२६ ॥
सिन्दूरं[1] नागजं[2] नागरक्तं[3] शृङ्गारभूषणम्[4] ।
चीनपिष्टं[5] हंसपाद[1]कुरुविन्दे[2] तु हिङ्गुल[3]ः ॥ १२७ ॥
शिलाजतु[1] स्याद्गिरिज[2]मर्थ्यं[3] गैरेय[4]मश्मजम्[5] ।
क्षार[1]ः काच[2]ः कुलाली[1] तु स्याच्चक्षुष्या[2] कुलत्थिका[3] ॥१२८॥
बोलो[1] गन्धरस[2]ः प्राण[3]ः पिण्डो[4] गोपरस[5]ः शश[6]ः ।
रत्नं[1] वसु[2] (3)मणि[3]स्तत्र वैडूर्यं[1] बालवायजम्[2] ॥ १२९ ॥

---

(१) शुल्वारिः २ पामारिः ३ कुष्ठारिः ४ । (२) नैपाली इति वा पाठः । (३) वैडूर्यं इत्यपि । मणी इत्यपि ङ्यन्तः, मणिकः माणिक्यं एतावप्यत्र, अष्टविधा रत्नजातिः यद्वाचस्पतिः "हीरकं १ मौक्तिकं २

मरकतं[1] त्वश्मगर्भं[2] गारुत्मतं[1] हरिण्मणिः[2] ।
पद्मरागो[1] लोहितक[2]लक्ष्मीपुष्पा[3]रुणोपलाः[4] ॥ १३० ॥
नीलमणि[1]स्त्विन्द्रनीलः[2] सूचीमुखं[1] तु हीरकः[2] ।
वरारकं[3] रत्नमुख्यं[4] वज्रपर्यायनाम[5] च ॥ १३१ ॥
विराटजो[(1)1] राजपट्टो[2] राजावर्त्तो[3]ऽथ विद्रुमः[1] ।
रक्ताङ्को[2] रक्तकन्दश्[3]च प्रवालं[4] हेमकन्दलः[5] ॥ १३२ ॥
सूर्यकान्तः[1] सूर्यमणिः[2] सूर्याश्मा[3] दहनोपलः[4] ।
चन्द्रकान्तश्[1]चन्द्रमणिश्[2]चान्द्रश्[3]चन्द्रोपलश्[4]च सः ॥ १३३ ॥
(२) क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ ।
शुक्तिजं[1] मौक्तिकं[2] मुक्ता[3] मुक्ताफलं[4] रसोद्भवम्[5(3)] ॥१३४॥

इति पृथ्वीकायः ॥

---

स्वर्णं ३ रजतं ४ चन्दनानि ५ च । शङ्ख ६ श्चर्म्म ७ च रत्नं ८ चेत्यष्टौ स्यू रत्नजातयः" । (१) विराटदेशोद्भवरत्नस्य विराटजहीरकस्य वा । (२) क्षीरधवलः स्फटिकः क्षीरस्फटिकः, तैलकान्तिः स्फटिकः तैलस्फटिकः ताभ्यामन्यौ भिन्नवर्णौ इमौ सूर्यकान्तचन्द्रकान्तौ द्वावपि खस्फटिकाख्यावित्यर्थः। (३) हस्तिमस्तकाद्युद्भवमपि मौक्तिकमुच्यते यदाह "हस्तिमस्तकदन्तौ तु दंष्ट्रा शुनवराहयोः । मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनयः" इति ।

## अथाप्कायः ।

नीरं[1] वारि[2] जलं[3] दकं[4] कमुदकं[5] पानीयं[7]मम्भः कुशं[9]
तोयं[10] जीवनं[11]जीवनीयं[12]सलिला[13]र्णो[14]ऽम्बु[15] वाः[16] शम्बरम्[17] ।
क्षीरं[18] पुष्करं[19]मेघपुष्पं[20]कमलं[21]न्यापः(१)[22] पयः[23]पाथसी[24]
कीलालं[25] भुवनं[26] वनं[27] घनरसो[28] यादोनिवासो[29]ऽमृतम्[30] ॥१३५॥
कुलीनसं[31] कबन्धं[32] च प्राणदं[33] सर्व्वतोमुखम्[34] ।
अस्थाघो[1]ऽस्थाग[2]मस्ताघ[3]मगाधं[4] चातलस्पृशि[5] ॥ १३६ ॥
निम्नं[1] गभीरं[2] गम्भीर[3]मुत्तानं[1] तद्विलक्षणम् ।
अच्छं[1] प्रसन्नो[2]ऽनच्छं[1] स्यादाविलं[2] कलुषं[3] च तत् ॥१३७॥
अवश्यायस्तु[1] तुहिनं[2] प्रालेयं[3] मिहिका[4] हिमम्[5] ।
स्यान्नीहार[6]स्तुषारश्च[7] हिमानी[1] तु महद्धिमम् ॥ १३८ ॥
पारावारः(२)[1] सागरो[2]ऽवारपारो[3]-

---

मौक्तिकानां हि नानाविधत्रसस्थावरशरीरेषु उत्पत्तिसद्भावेऽपि पृथिवीकायत्वमेव, सर्प्पशिरःसु मणयः करिदन्तेषु मौक्तिकानि विकलेन्द्रियेषु शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि वेण्वादिषु तान्येवेति वचनात् न दुष्टं मौक्तिकानां पृथ्वीकायत्वम् । (१) आपः स्त्रियां बहुवचनान्तः । (२) पारापारोऽपि ।

ऽकूपारोदध्यर्णवौ वीचिमाली ।
यादः-स्रोतो-वा-र्नदी-शः[१] सरस्वान् ।
सिन्धूदन्वन्तौ मितद्रुः समुद्रः ॥ १३९ ॥
आकरो मकराद्रत्नाज्जलान्निधि-धि-राशियः[२] ।
द्वीपान्तरा असङ्ख्यास्ते सप्तैवेति तु लौकिकाः ॥ १४० ॥
लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः[३] ।
तरङ्गे भङ्गवीच्यूर्म्युत्कलिका महति त्विह ॥ १४१ ॥
लहर्युल्लोलकल्लोला आवर्त्तः पयसांभ्रमः ।
तालूरोवोलकश्चासौ वेला स्याद्वृद्धिरम्भसः ॥ १४२ ॥

---

(१) यादईशः ८ स्रोतईशः ९ वारीशः १० नदीशः ११ । (२) मकराकरः १७ रत्नाकरः १८। यौगिकत्वात् मकरालयः रत्नराशिः इत्यादि। जलनिधिः १९ जलधिः २० जलराशिः २१ यौगिकत्वात् वारिराशिः वारिधिः इत्यादयोप्यूह्याः । (३) लवणादयो वारि येषां ते तथा लवणवारिर्लवणोदसमुद्रः १ क्षीरवारिः क्षीरोदसमुद्रः २ दधिवारिर्दध्युदसमुद्रः ३ आज्यवारिर्घृतोदसमुद्रः ४ सुरावारिः सुरोदसमुद्रः ५ इक्षुवारिः इक्षूदसमुद्रः ६ स्वादुवारिः स्वादूदसमुद्रः ७ यदाहुः "लवणो १ रसमयः २ सुरोदकः ३ सार्पिषो ४ दधिजलः ५ पयःपयाः ६ स्वादु ७ वारिरुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः" इति ।

(१) डिण्डीरोऽब्धिकफः फेनो बुद्बुदस्थासकौ समौ ।
मर्य्यादाकूलभूः कूलं प्रपातः कच्छरोधसी ॥ १४३ ॥
तटं तीरं प्रतीरं च पुलिनं तज्जलोज्झितम् ।
सैकतं चान्तरीपं तु द्वीपमन्तर्जले तटम् ॥ १४४ ॥
तत्परं पारमवारं त्वर्वाक् पात्रं तदन्तरम् ।
नदी हिरण्यवर्णा स्याद्रोधोवक्रा तरङ्गिणी ॥ १४५ ॥
सिन्धुः शैवलिनी वहा च ह्रादिनी स्रोतस्विनी निम्नगा
स्रोतो (२) निर्झरिणी सरिच्च तटिनी कूलङ्कषा वाहिनी ।
कर्षूर्द्वीपवती समुद्रदयिता धुन्यौ स्रवन्तीसर-
स्वत्यौ पर्वतजाऽपगे जलधिगा कुल्या च जम्बालिनी १४६
गङ्गा त्रिपथगा भागीरथी त्रिदशदीर्घिका ।
त्रिस्रोता जाह्नवी मन्दाकिनी भीष्मकुमारसूः (३) ॥ १४७ ॥

---

(१) डीङ् विहायसागतौ श्वादिरात्मनेपदी डयते जलाघातैरिति डिण्डीरः जम्बीराभीरेति सूत्रेण डीङोऽडित् ईरीङ्गित्वं पूर्वस्यनोन्तश्च । उज्ज्वलदत्तस्तु हिण्ड गत्यनादरयोः बाहुलकादतोऽपि इति ईरिन् प्रत्यये हिण्डते इतस्ततो गच्छतीति हिण्डीरः इत्याह । (२) स्रोतसी स्रोतांसि । (३) चमूवद्रूपाणि भीष्मसूः ८ कुमारसूः ९ ।

सीरद्ध्वजा विष्णुपदी सिद्ध-स्वः-स्वर्गि-खापगा[(1)] ।
ऋषिकुल्या हैमवती स्वर्वापी हरशेखरा ॥ १४८ ॥
यमुना यमभगिनी कालिन्दी सूर्यजा यमी ।
रेवेन्दुजा पूर्वगङ्गा नर्मदा मेखलाद्रिजा ॥ १४९ ॥
गोदा गोदावरी तापी तपनी तपनात्मजा ।
शुतुद्रिस्तु शतद्रुः स्यात् कावेरी त्वर्द्धजाह्नवी ॥१५०॥
करतोया सदानीरा चन्द्रभागा तु चन्द्रिका ।
वासिष्ठी गोमती तुल्ये ब्रह्मपुत्री सरस्वती ॥ १५१ ॥
विपाट्[(2)] विपाशाऽर्जुनी तु बाहुदा सैतवाहिनी ।
वैतरणी नरकस्था स्रोतोऽम्भःसरणं स्वतः ॥ १५२ ॥
प्रवाहः पुनरोघः स्यात् वेणी धारा रयश्च सः ।
घट्टस्तीर्थोऽवतारेऽम्बुवृद्धौ पूरः प्लवोऽपि च ॥ १५३ ॥
पुटभेदास्तु वक्राणि[(3)] भ्रमास्तु जलनिर्गमाः ।

---

(१) सिद्धापगा १२ स्वरापगा १३ स्वर्ग्यापगा १४ खापगा १५ । (२) विपाशौ विपाशः स्त्रियाम् । (३) "वक्रः कुटिले क्रूरे पुटभेदे शनैश्चरे" इति महेश्वरः । चक्राण्यपि यन्महेश्वरे "चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि । अम्भसा-

परिवाहो[१] जलोच्छ्वासः[२] कूपकास्तु[१] विदारकाः[२] ॥ १५४ ॥

प्रणाली[(१)][१] जलमार्गे[२]ऽथ पानं[१] कुल्या[२] च सारणिः[३] ।

सिकता[(२)][१] वालुका[२] बिन्दौ[१] पृषत्[२] पृषत[३] विप्रुषः[४][(३)] ॥ १५५ ॥

जम्बाले चिकिलौ[२] पङ्कः[३] कर्दमश्च[४] निषद्वरः[५] ।

शादो[६] हिरण्यबाहुस्तु[१] शोणो[२] नदे[१] पुनर्वहः[२] ॥ १५६ ॥

भिद्यः[३] उध्यः[४] सरस्वांश्च[५] द्रहो[१]ऽगाधजलो[२] ह्रदः[३] ।

कूपः[१] स्यादुदपानो[२]ऽन्धुः[३] प्रहि[४]र्नेमी[१] तु तत्रिका[२] ॥ १५७ ॥

नान्दीमुखो[१] नान्दीपटो[२] वीनाहो[३] मुखबन्धने ।

आहावस्तु[१] निपानं[(४)][२] स्यादुपकूपेऽथ दीर्घिका[१] ॥ १५८ ॥

वापी[२] स्यात् क्षुद्रकूपे तु चुरी[१] चुण्डी[२] च चूतकः[(५)][३] ।

उद्घाटकं[१] घटीयन्त्रं[(६)][२] पादावर्तो[१]ऽरघट्टकः[२] ॥ १५९ ॥

---

मपि चावर्त्ते" इति । (१) प्रणाली त्रिषु लिङ्गेषु प्रवर्त्तते (२) बहुवचनान्तः "वालिका वालुका वाला पिञ्छाला कर्णभूषणे" इति महेश्वरः । (३) "पृषन्ति बिन्दुपृषता. पुमांसो विप्रुषः स्त्रियाम्" इत्यमरः । पृषती पृषन्तीति क्लीबे, विप्रुट् विप्रुषौ स्त्रियाम् । (४) पश्वादीनां पानार्थं शिलादिभिः कूपसमीपे निर्मितम् । (५) "चूतकानां रसं पीत्वा पान्थाः पथि सुखं ययुः" इति गाथा । (६) येन कूपादेर्जलमूर्ध्वं वाह्यते तद्यन्त्रस्य ।

अखातं[1] तु देवखातं[2] पुष्करिण्यां तु खातकम्[3] ।
पद्माकर[1]स्तडाग[(1)]ः[2] स्यात् कासारः[3] सरसी[4] सरः[5] ॥ १६० ॥
वेशन्तः[1] पल्वलो[2]ऽल्पं तत् परिखा[1] खेय[2]खातिके[3] ।
स्यादालवाल[1]मावाल[(2)][2]मावापः[3] स्थानकं[4] च सः ॥ १६१ ॥
आधारस्त्वम्भसां बन्धो[1] निर्झर[1]स्तु झरः[2] सरिः[3] ।
उत्सः[4] स्रवः[5] प्रस्रवणं[6] जलधारो[1] जलाशयो[2] ॥ १६२ ॥

इत्यप्कायः ।

---

## अथ तेजस्कायः ।

वह्नि[1]र्बृहद्भानु[2]र्हिरण्यरेतसो[3]
धनञ्जयो[4] हव्यहविर्हुताशनः[(3)] ।
कृपीटयोनि[(4)][8]र्दमुना[(5)][9] विरोचनो[10]

---

(१) तडाक इत्यन्ये । (२) आवालं स्वमते नपुंसके व्याडिस्तु "आवालो जलपिण्डिलः" इति पुंस्याह । (३) हव्याशनः ५ हविरशनः ६ हुताशनः ७ । (४) कृपीटं जलं योनिरस्य, तथा च स्मृतिः । अद्भ्योऽग्नि-र्ब्रह्मणः क्षत्रमिति । (५) दमुनाः दमुनसौ दमुनसः दमूना इति दीर्घोऽप्यूकारः ।

शुशुक्षणी[११] छागरथस्[१२] तनूनपात्[(१)][१३] ॥ १६३ ॥
कृशानु[१४]वैश्वानर[१५]वीतिहोत्राः[१६]
वृषाकपिः[१७] पावक[१८]चित्रभानू[१९] ।
अप्पित्त[(२)][२०]धूमध्वज[२१]कृष्णवर्त्मा[(३)][२२]-
र्चिष्मच्[२३]छमीगर्भ[२४]तमोघ्न[२५]शुक्राः[२६] ॥ १६४ ॥
शोचिष्केशः[२७] शुचिर्[२८]हुतवहो[२९]षर्बुधाः[३०] सप्तमन्त्र-[(४)][३१]
ज्वालाजिह्वो[३२] ज्वलन[३४]शिखिनौ[(५)][३५] जागृधिर्[३६]जातवेदाः[३७] ।
बर्हिःशुष्मा[(६)][३८]निलसख[३९]वसू[४०] रोहिताश्वा[४१]श्रयासौ[४२]
बर्हिर्ज्योतिर्[(७)][४३]दहन[४४]बहुलौ[४५] हव्यवाहो[४६]ऽनलो[४७]ऽग्निः[४८] ॥ १६५ ॥
विभावसुः[४९] सप्तोदर्चिः[(८)][५०] स्वाहाग्नायी[२] प्रियाऽस्य च ।

---

(१) तनूनपातौ तनूनपातः । (२) अप्पित्तवर्ज्जा एते सर्वे पुंसि वह्निपर्य्यायाः । (३) कृष्णवर्त्मानौ कृष्णवर्त्मानः, अर्चिष्मान् अर्चिष्मन्तौ अर्चिष्मन्तः । (४) सप्तजिह्वः ३१ मन्त्रजिह्वः ३२ ज्वालाजिह्वः ३३ । (५) शिखी इन्नन्तः, जागृविर्हरिवत्, जातवेदस् सान्तः । (६) बर्हिशुष्माणौ बर्हिशुष्माणः (७) बर्हिर्ज्योतिषौ बर्हिर्ज्योतिषः, बर्हिषौ बर्हिषः, बर्हिरिति पृथग्नामापि । (८) सप्तार्चिषौ सप्तार्चिषः, उदर्चिषौ उदर्चिषः, स्वाहा गङ्गावत् अव्ययमपि ।

और्वः संवर्त्तकोऽब्ध्यग्निर्वाडवो वडवामुखः ॥ १६६ ॥
दवो दावो वनवह्निर्मेघवह्निरिदम्मदः ।
छामणस्तु करीषाग्निः कुकूलस्तु तुषानलः ॥ १६७ ॥
सन्तापः संज्वरो बाष्प ऊष्मा जिह्वाः स्युरर्चिषः ।
हेतिः कीला शिखा ज्वालाऽर्चिर्झलका महत्यसौ ॥१६८॥
स्फुलिङ्गोऽग्निकणोऽलातज्वालोल्काऽलातमुल्मुकम् ।
धूमः स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥ १६९ ॥
अम्भसूः करमालश्च स्तरीर्जीमूतवाह्यपि ।
तडिदैरावती विद्युच्चला शम्पाऽचिरप्रभा ॥ १७० ॥
आकालिकी शतह्रदा चञ्चला चपलाऽशनिः ।
सौदामिनी क्षणिका च ह्रादिनी जलवालिका ॥१७१॥

इति तेजस्कायः ।

## अथ वायुकायः ।

वायुः समीरसमिरौ पवनाशुगौ नभः

(१) ऊष्माणौ ऊष्माणः स्त्रियां क्लीबे च, स्त्रियां अर्चिः अर्चिषौ अर्चिषः क्लीबे अर्चिः अर्चिषी अर्चींषि । अर्चिः इति स्वरान्तोऽपि । (२) जीमूतवाही इन्नन्तः ।

श्वासो[६] नभ[(१)]स्वद्[७]निल[८]श्वसना[९]ः समीरण[१०]ः ।
वातो[११]ऽहिकान्त[१२]पवमान[१३]मरुत्[१४]प्रकम्पना[१५]ः
कम्पाक[१६]नित्यगति[१७]गन्धवह[१८]प्रभञ्जना[१९]ः ॥ १७२ ॥
मातरिश्वा[२०] जगत्प्राण[२१]ः पृषदश्वो[२२] महाबल[२३]ः ।
मारुत[२४]ः स्पर्शनो[२५] दैत्यदेवो[२६] झञ्झा[१] स वृष्टियुक् ॥१७३॥
प्राणो[१] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः ।
अपान[१]ः पवनो मन्था*पृष्ठपृष्ठान्तपार्ष्णिगः ॥ १७४ ॥
समान[१]ः सन्धिहृन्नाभिषूदानो[१] हृच्छिरोऽन्तरे ।
सर्वत्वग्वृत्तिको व्यान[१] इत्यङ्गे पञ्च वायवः ॥ १७५ ॥

इति वायुकायः ।

---

## अथ वनस्पतिकायः ।

अरण्य[१]मटवी[२] सत्रं[३] वार्क्षं[४] च गहनं[५] झष[६]ः ।
कान्तारं[७] विपिनं[८] कक्ष[९]ः स्यात् षण्डं[१०] काननं[११] वनम्[१२] १७६
दवो[१३] दाव[१४]ः प्रस्तार[१]स्तु तृणाटव्यां[२] झषो[३]ऽपि च ।

---

(१) नमस्वान् नमस्वन्तौ ।

* मन्था ग्रीवापश्चाद्भावः ।

अपोपाभ्यां वनं वेलमारामः कृत्रिमे वने ॥ १७७ ॥
निष्कुटस्तु गृहारामो बाह्यारामस्तु पौरकः ।
आक्रीडः पुनरुद्यानं राज्ञां त्वन्तःपुरोचितम् ॥ १७८ ॥
तदेव प्रमदवनममात्यादेस्तु निष्कुटे ।
(२)वाटी पुष्पा(३)द्वृक्षाच्चासौ क्षुद्रारामः प्रसीदिका ॥ १७९ ॥
वृक्षोऽगः शिखरी च शाखिफलदावद्रिर्हरिर्द्रुर्द्रुमो
जीर्णो द्रुर्विटपी (४)कुठः क्षितिरुहः कारस्करो विष्टरः ।
नन्द्यावर्त्तकरालिकौ तरुवसू पर्णी पुलाक्यंघ्रिपः
सालानोकहगच्छपादपनगौ रूक्षागमौ पुष्पदः ॥ १८० ॥
कुञ्जनिकुञ्जकुडङ्गाः स्थाने वृक्षैर्वृतान्तरे ।
पुष्पैस्तु फलवान् वृक्षो वानस्पत्यो विना तु तैः ॥ १८१ ॥
फलवान् वनस्पतिः स्यात् फलावन्ध्यः फलेग्रहिः ।
फलवन्ध्यस्त्ववकेशी फलवान् फलिनः फली ॥ १८२ ॥

---

(१) अपवनं १ उपवनम् २ । (२) "वाटस्तु वर्त्मनि वृतौ वाटी स्याद् गृहनिष्कुटे" इति श्रीधरः । (३) पुष्पवाटी १ वृक्षवाटी २ वाटी-शब्द इत्यर्थः । (४) कुटिः सौत्रो धातुः कोठतीति कुठः, कुठान् वृक्षान् इयर्त्ति इति कुठारः ।

ओषधिः[1] स्यादौषधिश्च[2] फलपाकावसानिका ।

क्षुपो[1] ह्रस्वशिफाशाखः प्रततिर्[1]व्रततिर्[2]लता[3] ॥ १८३ ॥

वल्ल्य[4]स्यां तु प्रतानिन्यां[1] गुल्मिन्[2]युलप[3]वीरुधः[4] ।

स्यात्प्ररोहो[1]ऽङ्कुरो[2]ऽङ्कूरो[3] रोहश्च[4] स तु पर्व्वणः ॥ १८४ ॥

समुत्थितः स्याद्बलिशं[1] शिखा[2]शाखा[3]लताः[4] समाः ।

साला[1] शाला[2] स्कन्धशाखा[3] स्कन्धः[1] प्रकाण्डमस्तकम् ॥ १८५ ॥

मूलाच्छाखावधिर्गण्डिः[1] प्रकाण्डो[2]ऽथ जटा[1] शिफा[2] ॥

प्रकाण्डरहिते स्तम्बो[1] विटपो[2] गुल्म[3] इत्यपि ॥ १८६ ॥

शिरो[(1)]नामाग्रं[2] शिखरं[3] मूलं[1] बुध्नो[2]ऽङ्घ्रिनाम[3] च ।

सारो[1] मज्जि[(2)] त्वचि[1] छल्ली[2] चोचं[3] वल्कं[4] च वल्कलम्[5] १८७

स्थाणौ[1] तु ध्रुवकः[2] शङ्कुः[3] काष्ठे[1] दलिकं[2] दारुणी[3] ।

निष्कुहः[1] कोटरो[2] मञ्जा[1] मञ्जरि[2]र्वल्लरिश्च[3] सा ॥ १८८ ॥

पत्त्रं[1(3)] पलाशं[2] छदनं[3] बर्हं[4] पर्णं[5] छदं[6] दलम्[7] ।

---

(१) शिरसो नामानि पर्य्यायाः अस्य अंघ्रेश्च चरणस्य नामानि पर्य्याया अस्य । (२) मज्जा मज्जानौ मज्जानः, त्वक् त्वच् त्वचौ त्वचः, आबन्तोऽपि त्वचा स्त्रियाम् अदन्तोऽपि त्वचः पुंसि इति हलायुधटीका । (३) प्रज्ञाद्यणि पात्त्रमपि यन्महेश्वरः "पात्त्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते"

नवे तस्मिन् किशलयं[1] किसलं[2] पल्लवो[3]ऽत्र तु(१) ॥ १८९ ॥
नवे प्रवालो[1]ऽस्य कोशी[1] शुङ्गौ(२)[2] मोढिर्दलस्त्रसौ[2] ।
विस्तार[1]विटपौ[2] तुल्यौ प्रसूनं[1] कुसुमं[2] सुमम्[3] ॥ १९० ॥
पुष्पं[4] सूनं[5] सुमनसः(३)[6] प्रसवश्च[7] मणीवकम्[8] ।
जारके[1]क्षालकौ[2] तुल्यौ कलिकायां[1] तु कोरकः[2] ॥ १९१ ॥
कुड्मले[1] मुकुलं[2] गुच्छे[1] गुच्छ[2]स्तबक[3]गुत्सकौ[4] ।
गुलुञ्छो[5]ऽथ रजः पौष्पं परागो[1]ऽथ रसो मधु(४)[1] ॥ १९२ ॥
मकरन्दो[2] मरन्दश्च[3] वृन्तं[1] प्रसवबन्धनम्[2] ।
प्रबुद्धो[1]ज्जृम्भ[2]फुल्लानि[3] व्याकोशं[4] विकचं[5] स्मितम्[6] ॥१९३॥
उन्मिषितं[7] विकसितं[8] दलितं[9] स्फुटितं[10] स्फुटम्[11] ।
प्रफुल्लो[12]त्प्रफुल्ल[13]सम्फुल्लो[14]च्छ्वसितानि[15] विजृम्भितम्[16] ॥ १९४ ॥
स्मेरं[17] विनिद्र[18]मुन्निद्र[19]मुन्निद्र[20]हसितानि[21] च ।
सङ्कुचितं[1] तु निद्राणं[2] मीलितं[3] मुद्रितं[4] च तत् ॥ १९५ ॥

---

तकारश्चापि धातुप्रत्ययभेदात् । (१) कन्दलमपि त्रिलिङ्गोऽयं "कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे" इति कोषान्तरम् । (२) शुङ्गा आवन्तः पुंस्त्रीलिङ्गोऽयं यद्वाग्भटः, वटप्ररोहैः शुङ्गैर्वेति । (३) बहुवचनान्तः स्त्रियाम् । (४) मधु क्लीबे, पुंस्यपीति हलायुधटीका गलकन्दोऽपि ।

फलं[1] तु सस्यं[2] तच्छुष्कं वानमामं शलाटु[1] च ।
ग्रन्थिः[1] पर्व[(1)2] परु[3] र्बीजकोशी[1] शिम्बा[2] शमिः[3] शमी[4] ॥१९६॥
शिम्बिश्च[5] पिप्पलोऽश्वत्थः[2] श्रीवृक्षः[3] कुञ्जराशनः[4] ।
कृष्णवासो[5] बोधितरुः[6] प्लक्षस्तु[1] पर्कटी[2] जटी[3] ॥ १९७ ॥
न्यग्रोधस्तु[1] बहुपात्[2] स्याद्वटो[3] वैश्रवणालयः[4] ।
उदुम्बरो[1] जन्तुफलो[2] मशकी[3] हेमदुग्धकः[4] ॥ १९८ ॥
काकोदुम्बरिका[1] फल्गुर्[2] मलयुर्[3] जघनेफला[4] ।
आम्रश्[1]चूतः[2] सहकारः[3] सप्तपर्णस्तु[1] युक्छदः[2] ॥ १९९ ॥
शिग्रुः[1] शोभाञ्जनोऽक्षीव[3]-तीक्ष्णगन्धक[4]-मोचकाः[5] ।
श्वेतेऽत्र श्वेतमरिचः[1] पुन्नागः[1] सुरपर्णिका[2] ॥ २०० ॥
बकुलः[1] केसरोऽशोकः[1] कङ्केल्लिः[(2)2] ककुभोऽर्जुनः[2] ।
मालूरः[1] श्रीफलो[2] बिल्वः[3] किङ्किरातः[1] कुरण्टकः[2] ॥ २०१ ॥
त्रिपत्रकः[1] पलाशः[2] स्यात् किंशुको[3] ब्रह्मपादपः[4] ।
तृणराजस्[1] तलस्[2] तालो[3] रम्भा[1] मोचा[2] कदल्यपि[3] ॥२०२ ॥

---

(१) पर्वन् नान्तः क्लीबे, परुषी परूंषि क्लीबे । (२) कं उदकं केलति गच्छतीति कङ्केल्लिः, स्त्रीलिङ्गः यदाहामरः "स्त्रियां त्वशोके कङ्केल्लिः" पृषोदरादित्वात्साधु ।

करवीरो[1] हयमारः[2] कुटजो[1] गिरिमल्लिको[2] ।
विदुलो[1] वेतसः[2] शीतो[3] वानीरो[4] वञ्जुलो[5] रथः[6] ॥ २०३ ॥
(१)कर्कन्धूः[1] कुवली[2] कोली[3] बदर्य्यथ[4] हलिप्रियः[1] ।
नीपः[2] कदम्बः[3] सालस्तु[1] सर्जोऽरिष्टस्तु[1] फेनिलः[2] ॥ २०४ ॥
निम्बोऽरिष्टः[2] पिचुमन्दः[3] समौ पिचुलझाबुकौ[2] ।
कार्पासस्तु[1] बादरः[2] स्यात् पिचव्यस्तूलकं[1] पिचुः[2] ॥ २०५ ॥
आरग्वधः[1] कृतमाले[2] वृषो[1] वासाटरूषके[2] ।
करञ्जस्तु[1] नक्तमालः[2] स्नुहिर्वज्री[2] महातरुः[3] ॥ २०६ ॥
महाकालस्तु[1] किम्पाके[2] मन्दारः[1] पारिभद्रके[2] ।
मधुकस्तु[1] मधुष्ठीलो[2] गुडपुष्पो[3] मधुद्रुमः[4] ॥ २०७ ॥
पीलुः[1] सिनो[2] गुडफलो[3] गुग्गुलुस्तु[1] पलङ्कषः[2] ।
राजादनः[1] पियालः[2] स्यात्तिनिशस्तु[1] रथद्रुमः[2] ॥ २०८ ॥
नारङ्गस्तु[1] नारङ्गे[2] इङ्गुदी[1] तापसद्रुमः[2] ।
काश्मरी[1] भद्रपर्णी[2] श्रीपर्ण्यम्लिका[1] तु तिन्तिडी[2] ॥ २०९ ॥
शेलुः[1] श्लेष्मातकः[2] पीतसालस्तु[1] प्रियकोऽसनः[2] ।

---

(१) कर्कन्धूः पुंसि स्त्रियां च स्त्रियां जम्बूवत् ।

पाटलिः[1] पाटला[2] भूर्जो[1] बहुत्वक्को[2] मृदुच्छदः[3] ॥ २१० ॥
द्रुमोत्पलः[1] कर्णिकारे[2] निचुले[1] हिज्जलेज्जलौ[3] ।
धात्री[1] शिला[2] चामलकी[3] कलिरक्षो[1][2] बिभीतकः[3] ॥ २११ ॥
हरितक्यभया[1][2] पथ्या[3] त्रिफला[1] तत् फलत्रयम् ।
तापिच्छस्तु[1] तमालः[2] स्याच्चम्पको[1] हेमपुष्पकः[2] ॥ २१२ ॥
निर्गुण्डी[1] सिन्दुवारेऽतिमुक्तके[2][1] माधवी[2] लता[3] ।
वासन्ती[4] चौड्रपुष्पं[1] तु जपा[2] जातिस्तु[1] मालती[2] ॥ २१३ ॥
मल्लिका[1] स्याद्विचाकिलः[2] सप्तला[1] नवमालिका[2] ।
मागधी[1] यूथिका[2] सा तु पीता स्याद्धेमपुष्पिका[1] ॥ २१४ ॥
प्रियङ्गुः[1] फलिनी[2] श्यामा[3] बन्धूको[1] बन्धुजीवकः[2] ।
करुणे[1] मल्लिकापुष्पो[2] जम्बीरे[1] जम्भजम्भलौ[2][3] ॥ २१५ ॥
मातुलिङ्गो[1] बीजपुरः[2] करीरक्रकरौ[1][2] समौ ।
पञ्चाङ्गुलः[1] स्यादेरण्डे[2] धातक्यां[1] धातुपुष्पिका[2] ॥ २१६ ॥
कपिकच्छूरात्मगुप्ता[1][2] धत्तूरः[1] कनकाह्वयः[2] ।
कपित्थस्तु[1] दधिफलो[2] नारिकेरस्तु[1] लाङ्गली[2] ॥ २१७ ॥
आम्रातको[1] वर्षपाकी[(1)][2] केतकः[1] क्रकचच्छदः[2] ।

(१) वर्षपाकिणौ वर्षपाकिणः ।

कोविदारो युगपत्रः सल्लकी तु गजप्रिया ॥ २१८ ॥
वंशो वेणुर्यवफलस्त्वचिसारस्तृणध्वजः ।
मस्करः शतपर्वा च स्वनन् वातात्स कीचकः ॥ २१९ ॥
तुकाक्षीरी वंशक्षीरी त्वक्क्षीरी वंशरोचना ।
पूगे क्रमुकगूवाकौ तस्योद्वेगं पुनः फलम् ॥ २२० ॥
ताम्बूलवल्ली ताम्बूली नागपर्य्यायवल्ल्यपि[1] ।
तुम्ब्यलाबूः[2] कृष्णला तु गुञ्जा द्राक्षा तु गोस्तनी ॥२२१॥
मृद्वीका हारहूरा च गोक्षुरस्तु त्रिकण्टकः ।
श्वदंष्ट्रा स्थलशृङ्गाटो गिरिकर्ण्यपराजिता ॥ २२२ ॥
व्याघ्री निदिग्धिका कण्टकारिका स्यादथामृता ।
वत्सादनी गडूची च विशाला त्विन्द्रवारुणी ॥ २२३ ॥
उशीरं वीरणीमूले ह्रीवेरं वालकं जलम् ।
प्रपुन्नाटस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥ २२४ ॥
लट्वायां महारजनं कुसुम्भं कमलोत्तरम् ।
लोध्रे तु गालवो रोध्रतिल्वशावरमार्जनाः ॥ २२५ ॥
मृणालिनी पुटकिनी नलिनी पङ्कजिन्यपि ।

---

(१) नागवल्ली फणिलता इत्यादि । (२) अलाबूः स्त्रियां क्लीवे च ।

कमलं[1] नलिनं[2] पद्मम[3]रविन्दं[4] कुशेशयम्[5] ॥ २२६ ॥
परं शतसहस्राभ्यां[7] पत्रं[(1)] राजीव[8]पुष्करे[9] ।
बिस[(2)]प्रसूतं[10] नालीकं[11] तामरसं[12] महोत्पलम्[13] ॥ २२७ ॥
तज्जलात् सरसः पङ्कात्परैरुट्-रुह-जन्म-जैः[16(3)] ।
पुण्डरीकं[1] सिताम्भोजमथरक्तसरोरुहे[1] ॥ २२८ ॥
रक्तोत्पलं[2] कोकनदं[3] कैरविण्यां[(4)1] कुमुद्वती[2] ।
उत्पलं[1] स्यात् कुवलयं[2] कुवेलं[3] कुवलं[4] कुवम्[5] ॥ २२९ ॥
श्वेते तु तत्र कुमुदं[1] कैरवं[2] गर्दभाह्वयम्[3] ।
नीले तु स्यादिन्दीवरं[1] हल्लकं[1] रक्तसन्ध्यके[2] ॥ २३० ॥
सौगन्धिकन्तु[1] कह्लारं[2(5)] बीजकोशो[1] वराटकः[2] ।
कर्णिका[3] पद्मनालं[1] तु मृणालं[2] तन्तुलं[3] विसम्[4] ॥ २३१ ॥
किञ्जल्कं[1] केसरं[2] संवर्त्तिका तु स्यान्नवं दलम् ।

---

( १ ) शतपत्रं ६ सहस्रपत्रम् ७ । ( २ ) विसात्प्रसूतं विससूतं विसप्रसूनमपि इति टीका । ( ३ ) जलरुट्, जलरुहं, जलजन्म, जलजम् । सरोरुट्, सरोरुहं, सरोजन्म, सरोजम् । पङ्करुहं, पङ्करुट्, पङ्करुहं, पङ्कजन्म, पङ्कजम् । ( ४ ) चन्द्रविकाशिन्याः । ( ५ ) कैरविण्यादिकह्लारान्तं चन्द्रविकासिनि ।

करहाटः शिफा च स्यात् कन्दे सलिलजन्मनाम् (१) ॥ २३२ ॥
उत्पलानां तु शालूकं (२) नील्यां शैवालशेवले ।
शेवालं शैवलं शेपालं जलाच्छूकंनीलिके (३) ॥ २३३ ॥
धान्यं (४) तु सस्यं सीत्यं च व्रीहिस्तम्बकरिश्च तत् ।
आशुः स्यात् पटलो व्रीहिर्गर्भपाकी (५) तु षष्टिकः ॥ २३४ ॥
शालयः कलमाद्याः स्युः कलमस्तु कलामकः ।
लोहितो रक्तशालिः स्यान्महाशालिः सुगन्धिकः ॥२३५॥
यवो हयप्रियस्तीक्ष्णशुकस्तोक्मस्त्वसौ हरित् ।
मङ्गल्यको मसूरः स्यात् कलायस्तु सतीनकः ॥ २३६ ॥
हरेणुः खण्डिकश्चाथ चणको हरिमन्थकः ।

---

( १ ) कन्दे मूले यदाह हैमानेकार्थः "कन्दोऽब्दे सूरणे सस्यमूले" इति । ( २ ) उत्पलानां चन्द्रविकासिनाम् । धन्वन्तरिस्तु "पद्ममूलं तु शालूकमित्याह । ( ३ ) जलशूकं ७ जलनीलिका ८ । ( ४ ) व्रीहि १ र्यवो २ मसूरो ३ गोधूमो ४ मुद्ग ५ माष ६ तिल ७ चणकाः ८ । अणवः ९ प्रियङ्गु १० कोद्रव ११ मयुष्टकाः १२ शालि १३ राढक्यः ॥ १४ किञ्च कलायः १५ कुलत्थौ १६ सारणाश्च १७ सप्तदशानि धान्यानि । ( ५ ) गर्भपाकिणौ गर्भपाकिणः ॥

माषस्तु मदनो नन्दी वृष्यो बीजवरो बली ॥ २३७ ॥
मुद्गस्तु प्रथनो लोभ्यो बलाटो हरितो हरिः ।
पीतेऽस्मिन् वसु खण्डेरी प्रवेलजयशारदाः ॥ २३८ ॥
कृष्णे प्रवरवासन्तहरिमन्थजशिम्बिकाः ।
वनमुद्गे तु वरक-निगूढक-कुलीनकाः ॥ २३९ ॥
खण्डी(१) च राजमुद्गे तु मकुष्टकमयुष्टकौ ।
गोधूमे सुमनो(२) वल्ले निष्पावः शितशिम्बिकः ॥ २४० ॥
कुलत्थस्तु कालवृन्तस्ताम्रवृन्तो कुलत्थिका ।
आढकी तुवरी वर्णा स्यात्कुल्माषस्तु यावकः ॥ २४१ ॥
नीवारस्तु वनव्रीहिः श्यामाकश्यामकौ समौ ।
कङ्गुस्तु कङ्गुनी कङ्गुः प्रियङ्गुः पीततण्डुला ॥ २४२ ॥
सा कृष्णा मधुका रक्ता शोधिका मुसटी सिता ।
पीता माधव्यथोद्दालः कोद्रवः कोरदूषकः ॥ २४३ ॥
चीनकस्तु काककङ्गुर्यवनालस्तु(३) यो नलः ।

---

(१) खण्डिनौ खण्डिनः । (२) सुमनः अच्प्रत्ययान्तत्वात् देववत् । (३) वर्वटी गणिकायां स्यात् व्रीहिभेदेऽपि बर्बटी इति श्रीधरः, यथा मरौ चर्वन्ति बर्वटी, राजमाषस्तु वर्वटः इति त्रिकाण्डशेषः ।

जूर्णाह्वयो देवधान्यं जोन्नाला बीजपुष्पिका ॥ २४४ ॥
शणं भङ्गा मातुलानी स्यादुमा तु क्षुमाऽतसी ।
गवेधुका गवेधुः स्याज्जर्त्तिलो(१)ऽरण्यजस्तिलः ॥ २४५ ॥
षण्ढतिले तिलपिञ्जस्तिलपेजोऽथ सर्षपः ।
कदम्बकस्तन्तुभोऽथ सिद्धार्थः श्वेतसर्षपः ॥ २४६ ॥
माषादयः शमीधान्यं शूकधान्यं यवादयः ।
स्यात्सस्यशूकं किंशारुः कणिशं सस्यशीर्षकम् ॥ २४७ ॥
स्तम्बस्तु गुच्छो धान्यादेर्नालं काण्डोऽफलस्तु सः ।
पलः पलालो धान्यत्वक् तुषो बुसे कडङ्गरः ॥ २४८ ॥
धान्यमावसितं रिद्धं तत्पूतं निर्बुसीकृतम् ।
मूलपत्रकरीराग्रफलकाण्डा-विरूढकाः ॥ २४९ ॥
त्वक् पुष्पं फलकं शाकं दशधा शिग्रुकञ्च तत् ।
तण्डुलीयस्तण्डुलेरो मेघनादोऽल्पमारिषः ॥ २५० ॥

---

(१) इहानुक्तान्यपि तिलनामानि त्रीणि यथा तिलः १ पूत २ तैलफलः ३ इति मदनपालः ।

बिम्बी[१] रक्तफला[२] पीलुपर्णी[३] स्यात्तुण्डकेरिका[४] ।
जीवन्ती[१] जीवनी[२] जीवा[३] जीवनीया[४] मधुस्रवा[५] ॥ २५१ ॥
वास्तुकं[१] तु क्षारपत्रं[२] पालक्या(१)[१] मधुसूदनी[२] ।
रसोनो[१] लशुनोऽरिष्टो[३] म्लेच्छकन्दो[४] महौषधम्[५] ॥२५२॥
महाकन्दो[६] रसोनोऽन्यो गृञ्जनो[१] दीर्घपत्रकः[२] ।
भृङ्गराजो[१] भृङ्गरजो[२] मार्कवः[३] केशरञ्जनः[४] ॥ २५३ ॥
काकमाची[१] वायसी[२] स्यात् कारवेल्लः[१] कठिल्लकः[२] ।
कूष्माण्डकस्तु[१] कर्कारुः[२] कोशातकी(२)[१] पटोलिका[२] ॥२५४॥
चिर्भिटी[१] कर्कटी(३)[२] वालुङ्क्यै[३]र्वारु[४]स्त्रपुसी[५] च सा ।
अर्शोघ्नः[१] सूरणः[२] कन्दः[३] शृङ्गवेरक[१]मार्द्रकम्[२] ॥ २५५ ॥
कर्कोटकः[१] किलासघ्न[२]स्तिक्तपत्रः[३] सुगन्धकः[४] ।
मूलकं[१] तु हरिपर्णं[२] सेकिमं[३] हस्तिदन्तकम्[४] ॥ २५६ ॥

---

(१) पालङ्क्याम् इति वा । (२) "कोशातकी कृतच्छिद्रा जालिनी कृतवेधना । मृदङ्गफलिका क्ष्वेडा घण्टाली कर्कशच्छदा" इति । (३) कर्कट्या स्यादिर्वारुरीर्वारुवत् उर्वारुरूर्वारुरपि एर्वारुश्चिर्भिटी तथा चिर्भिटं चिर्भिटस्तद्वत् वालुङ्क. स्यादालुङ्क्यपि । त्रपुसी त्रपुषी त्रपुषं त्रिपुषम् इति शब्दभेदे नाममाला ।

तृणं[१] नडाजि निवारादि च शस्यन्तु तन्नवम् ।
सौगन्धिकं[१] देवजग्धं[२] पौरं[३] कत्तृण[४]रौहिषे[५] ॥ २५७ ॥

दर्भ[१]: कुशः[२] कुथो[३] बर्हिः[(१)४] पवित्र[५]मथ ते जनः[१] ।
गुन्द्रो[२] मुञ्जः[३] शरो[४] दूर्वा[१] त्वनन्ता[२] शतपर्विका[३] ॥२५८॥
हरिताली[४] रुहा[५] पोटगलस्[१]तु धमनो[२] नडः[३] ।
कुरुविन्दो[१] मेघनामा[२] मुस्ता[३] गुन्द्रा[१] तु सोत्तमा ॥ २५९ ॥

वल्बजा[१] उलपो[२]ऽथेक्षुः[१] स्याद्रसालो[२]ऽसिपत्रकः[३] ।
भेदाः[(२)१] कान्तारपुण्ड्राद्यास्[१]तस्य मूलं तु मोरटम्[१] ॥ २६० ॥
काशस्[१]त्विषीका[२] घासश्[१]च यवसं[२] तृणम्[१]अर्जुनम्[२] ।
विषः[१] क्ष्वेडो[२] रसस्[३]तीक्ष्णं[४] गरलो[५]ऽथ[(३)] हलाहलः[१] ॥ २६१ ॥
वत्सनाभः[२] कालकूटो[३] ब्रह्मपुत्रः[४] प्रदीपनः[५] ।
सौराष्ट्रिकः[६] शौल्किकेयः[७] काकलो[८] दारदोऽपि[९] च २६२ ॥
अहिच्छत्रो[१०] मेषशृङ्गः[११] कुष्ठ[१२]वालूक[१३]नन्दनाः[१४] ।
कैराटको[१५] हैमवतो[१६] मर्कटः[१७] करवीरकः[१८] ॥ २६३ ॥

---

( १ ) पुंसि बर्हिषौ बर्हिषः क्लीबे बर्हिषी बर्हींषि । ( २ ) इक्षोर्भेदा जातयः कान्ताराद्या एकादश । ( ३ ) स्थावरविषजातीनामेकैकम् ।

सर्षपो[१९] मूलको[२०] गौरार्द्रकः[२१] सक्तुककर्दमौ[२२] [२३] ।
अङ्कोल्लसारः[२४] कालिङ्गः[२५] शृङ्गिको[२६] मधुसिक्थकः[२७] ॥ २६४ ॥
इन्द्रो[२८] लाङ्गुलिको[२९] विस्फुलिङ्ग[३०]-पिङ्गल[३१]गौतमौ[३२] ।
मुस्तको[३३] दालवश्चेति[३४] स्थावरा विषजातयः(१) ॥ २६५ ॥
कुरण्टाद्या(२) अग्रबीजा[१] मूलजास्तूत्पलादयः[२] ।
पर्व्वयोनय इक्ष्वाद्याः[३] स्कन्धजाः सल्लकीमुखाः[४] ॥ २६६ ॥
शाल्यादयो बीजरुहाः[५] सम्मूर्छजास्तृणादयः[६] ।
स्युर्वनस्पतिकायस्य षडेता मूलजातयः ॥ १६७ ॥

इति वनस्पतिकायः ।

---

( १ ) विषभेदाः सर्वे पुंक्लीवलिङ्गा इति वाचस्पतिः । पुंसि क्लीवेच काकोलेत्याद्यमरोऽपि । ( २ ) वृक्षादिजातिविशेषानाह ।

## द्वीन्द्रियाः ।

नीलङ्गुः कृमिरन्तर्जः क्षुद्रः कीटो बहिर्भवः ।
पुलकास्तूभये[1]ऽपि स्युः कीकसाः कृमयोऽणवः ॥ २६८ ॥
काष्ठकीटो घुणो गण्डूपदः किञ्चुलकः कुसूः ।
भूलता गण्डूपदी तु शिल्यैस्त्रपा जलौकसः ॥ २६९ ॥
जलालोका जलूका च जलौका जलसर्पिणी ।
मुक्तास्फोटोऽब्धिमण्डूकी शुक्तिः कम्बुस्तु वारिजः २७०
त्रिरेखः षोडशावर्त्तः शङ्खोऽथ क्षुद्रकम्बवः ।
शङ्खनकाः क्षुल्लकाश्च शम्बूकास्त्वम्बुमात्रजाः ॥ २७१ ॥
कपर्दस्तु हिरण्यः स्यात् पणास्थिकवराटकौ ।

इति द्वीन्द्रियाः ।

---

## त्रीन्द्रियाः ।

दुर्नामा तु दीर्घकोशी पिपीलकस्तु पीलकः ॥ २७२ ॥
पिपीलिका तु हीनाङ्गी ब्राह्मणी स्थूलशीर्षिका ।
घृतेली पिङ्गकपिशाथोपजिह्वोपदेहिका ॥ २७३ ॥

---

( १ ) उभये अन्तर्भवा बहिर्भवाश्च ।

वस्युप[3]दीका[4] लिक्षा[1] तु रिक्षा[2] यूका[1] तु षट्पदी[2] ।
गोपालिका[1] महाभीरु[2]र्गोमयोत्था[1] तु गर्दभी[2] ॥ २७४ ॥
मत्कुण[1]स्तु कोलकुणे[2] उद्दंश[3]ः किटिभो[4]त्कुणौ[5] ।
इन्द्रगोप[1]स्त्वग्निरजी[2] वैराट[3]स्तितिभो[4]ऽग्निकः[5] ॥ २७५ ॥
कर्णजलौका तु कर्णकीटा[1] शतपदी[2] च सा ।

इति त्रीन्द्रियाः ।

---

## चतुरिन्द्रियाः ।

ऊर्णनाभ[1]स्तन्त्रवायो[2] जालिको[3] जालकारकः[4] ॥ २७६ ॥
कृमि[5]र्मर्कटको[6] लूता[7] लालास्रावो[8]ऽष्टपाच्च[9] सः ।
वृश्चिको[1] द्रुणे[2] आ[(1)]ल्या[3]लि[4]रलं[1] तत्पुच्छकण्टकः ॥ २७७ ॥
भ्रमरो[1] मधुकृद्[2] भृङ्ग[3]श्चञ्चरीक[4]ः शिलीमुख[5]ः ।
इन्दिन्दिरो[6]ऽली[7] रोलम्बो[8] द्विरेफो[9]ऽस्य षडङ्घ्रयः[(2)] ॥२७८॥
भोज्यन्तु पुष्प[1(3)]मधुनी[2] खद्योतो[1] ज्योतिरिङ्गणः[2] ।

---

( १ ) आलमनर्थमत्रास्तीत्याली, आलं स्यादनर्थहरितालयोरित्यनेकार्थः, आलिनौ आलिनः । आली आलयः इत्यपि । ( २ ) यौगिकशब्दनिष्पत्त्यर्थमिदम्, तेन षडङ्घ्रिः, षट्पद इत्यादि । (३) पुष्पलिट् पुष्पन्धयः, मधुलिट् मधुधयः, मधुव्रत इत्यादि सिध्यति ।

पतङ्गः शलभः[१] क्षुद्रा सरघा मधुमक्षिका ॥ २७९ ॥
माक्षिकादि[२] तु मधु स्यान्मधूच्छिष्टं तु सिक्थकम् ।
पर्वणी मक्षिका नीला पुत्रिका तु पतङ्गिका ॥ २८० ॥
वनमक्षिका तु दंशो दंशी तज्जातेरल्पिका ।
तैलाटी वरटा गन्धोली स्याच्चीरी तु चोरुका ॥ २८१ ॥
झिल्लीका झिल्लिका वर्षकारी भृङ्गारिका च सा ।

द्वित्रिचतुरिन्द्रियाः सम्पूर्णाः ।

# तिर्य्यक्काण्डः ५

पशुस्तिर्य्यङ् चरिर्हिंस्रेऽस्मिन् व्यालः श्वापदोऽपि च २८२

हस्ती मतङ्गजगजद्विपकर्य्यनेकपाः
मातङ्गवारणमहामृगसामयोनयः[३] ।
स्तम्बेरमद्विरदसिन्धुरनागदन्तिनो

---

(१) शलभशब्दः तिड्डपर्यायोऽपि यद्देशिसूत्रं तिड्डोसलहपिलड्डा इति शलभः पिशाचश्च इति तट्टीका शलभच्छायमित्यत्र तिड्डानां छायेत्यर्थः। (२) माक्षिकं यौगिकत्वादादिशब्दाच्च क्षौद्रं सारघं, मक्षिका भ्रम्मराली स्यात् इत्यनुक्तेऽपि। (३) सामयोनिः इकारान्तः ।

दन्तावलः करटिकुञ्जरकुम्भिपीलवः(१) ॥ २८३ ॥
इभः करेणु(२)र्गजोऽस्य स्त्री धेनुका वशाऽपि च ।
भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातयः ॥ २८४ ॥
कालेऽप्यजातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणौ ।
पञ्चवर्षो गजो बालः स्यात्पोतो दशवर्षकः ॥ २८५ ॥
विक्को विंशतिवर्षः स्यात् कलभस्त्रिंशदब्दकः ।
यूथनाथो यूथपतिर्मत्ते प्रभिन्नगर्जितौ ॥ २८६ ॥
मदोत्कटो मदकलः समावुद्भ्रान्तनिर्मदौ ।
सज्जितः कल्पितस्तिर्य्यग्घाती परिण(३)तो गजः ॥ २८७ ॥
व्यालो दुष्टगजो गम्भीरवेद्य(४)वमताङ्कुशः ।
राजवाह्यस्तूपवाह्यः सन्नाह्यः समरोचितः ॥ २८८ ॥
उदग्रदन्ती षादन्तौ बहूनां घटना घटा ।
मदो दानं प्रवृत्तिश्च वमथुः करशीकरः ॥ २८९ ॥

---

(१) पीलुर्भानुवत् । (२) करेणू करेणवः । (३) "तिर्य्यग्दन्तप्रहारस्तु गजो परिणतो मत." इति हलायुधः । (४) "त्वग्भेदाच्छोणितस्रावादामांसक्रथनादपि । सञ्ज्ञा न लभते यस्तु गजो गम्भीरवेद्यसौ" इति लक्षणम् ।

हस्तिनासा करः शुण्डा हस्तोऽस्याग्रं तु पुष्करम् ।
अङ्गुलिः कर्णिका दन्तौ विषाणौ स्कन्ध आसनम् ॥२९०॥
कर्णमूलं चूलिका स्यादीषिका त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्याणं गण्डस्तु करटः कटः ॥ २९१ ॥
अवग्रहो ललाटं स्यादारक्षः कुम्भयोरधः ।
कुम्भौ तु शिरसः पिण्डौ कुम्भयोरन्तरं विदुः ॥ २९२ ॥
वातकुम्भस्तु तस्याधो वाहित्थं तु ततोप्यधः ।
वाहित्थाधः प्रतिमानं पुच्छमूलं तु पेचकः ॥ २९३ ॥
दन्तभागः पुरो भागः पक्षभागस्तु पार्श्वतः ।
पूर्व्वस्तु जङ्घादिदेशो गात्रं स्यात्पश्चिमोऽपरा ॥ २९४ ॥
बिन्दुजालं पुनः पद्मं शृङ्खलो निगडोऽन्दुकः ।
हिञ्जीरश्च पादपाशो वारिस्तु गजबन्धभूः ॥ २९५ ॥
त्रिपदी गात्रयो(२)र्बन्ध एकस्मिन्नपरेऽपि च ।

---

(१) गच्छत्यनेन गात्रं स्त्रियां गात्रा, अपरभागे भवत्वादपरा क्लीबे अपरं जपादित्वाद्वत्वे वरा । (२) गात्रयोरिति द्वयोः पूर्वजङ्घयोरेकस्मिन् अपरे इति, एकस्यां पश्चिमजङ्घायां च अपराशब्दस्य स्त्रीक्लीबत्वात् अपरे इति सप्तमी ।

तोत्रं वेणुकमालानं बन्धस्तम्भोऽङ्कुशः सृणिः ॥ २९६ ॥
अपृष्ठं त्वङ्कुशस्याग्रं यातमङ्कुशवारणम् ।
निषादिनां पादकर्म यतं वीतं तु तद्द्वयम् ॥ २९७ ॥
कक्ष्या दूष्या वरत्रा स्यात् कण्ठबन्धः कलापकः ।
घोटकस्तुरगस्तार्क्ष्यस्तुरङ्गोऽश्वस्तुरङ्गमः ॥ २९८ ॥
गन्धर्वोऽर्वा(१) सप्तिवीती वाहो वाजी हयो हरिः ।
वडवाऽश्वा प्रसूर्वामी किशोरोऽल्पवया हयः ॥ २९९ ॥
जवाधिकस्तु जवनो रथ्यो वोढा रथस्य यः ।
अजानेयः कुलीनः स्यात् तत्तद्देशा(२)स्तु सैन्धवाः ॥ ३०० ॥
वानायुजाः पारसीकाः काम्बोजा वाह्लिकादयः ।
विनीतस्तु साधुवाही दुर्विनीतस्तु शूकलः ॥ ३०१ ॥
कश्यः कशार्हो हृद्दक्षावर्ती श्रीवत्सकी हयः ।

---

(१) अर्वा अर्वाणौ अर्वाणः, अर्वाणम् शसादौ अनोऽस्य इत्यनेन जायमानाकारलोपे नवमन्तसंयोगात् इत्यनेन वमन्तसंयोगपरत्वादकारस्य लोपानुत्पत्तौ अर्वणः अर्वणा अर्वभ्या स्वमतमेतत् अन्यमते तु अर्वणस्त्रसावनञ इति पाणिनीयसूत्रेण अर्वन्तौ अर्वन्त इत्यादि । (२) स स देशो जन्मभूमिरेषाम् ।

पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥ ३०२ ॥
पुच्छोरःखुरकेशास्यैः सितैः स्यादष्टमङ्गलः ।
सिते तु कर्कोकाहौ खोङ्गाहः श्वेतपिङ्गले ॥ ३०३ ॥
पीयूषवर्णे सेराहः पीते तु हरियो हये ।
कृष्णवर्णे तु खुङ्गाहः कियाहो लोहितो हयः ॥ ३०४ ॥
आनीलस्तु नीलकोऽथ त्रियूहः कपिलो हयः ।
बोल्लाहस्त्व[1]यमेव स्यात् पाण्डुकेशरबालधिः ॥ ३०५ ॥
उराहस्तु मनाक्पाण्डुः कृष्णजङ्घो भवेद्यदि ।
सुरूहको गर्दभाभी वोरुखानस्तु पाटलः ॥ ३०६ ॥
कुलाहस्तु मनाक् पीतः कृष्णः स्याद्यदि जानुनि ।
उकनाहः पीतरक्तच्छायः स[2] एव तु क्वचित् ॥ ३०७ ॥
कृष्णरक्तच्छविः प्रोक्तः शोणः कोकनदच्छविः ।
हरिकः पीतहरितच्छायः स एव हालकः ॥ ३०८ ॥
पङ्गुलः सितकाचाभो हलाहश्चित्रितो हयः ।
ययुरश्वोऽश्वमेधीयः प्रोथमश्वस्य नासिका ॥ ३०९ ॥

---

(१) अयं त्रियूह एव । (२) स उकनाह एव ।

मध्यं कश्यं निगालस्तु[1] गलोद्देशः खुराः शफाः[2] ।
अथ पुच्छं[1] वालहस्तो[2] लाङ्गूलं[3] लूमं(१)[4] वालधिः[5] ॥३१०॥
अपावृत्त[1]परावृत्त[2]लुठितानि[3] तु वेल्लितं[4] ।
धोरितं[1] वल्गितं[2] प्लुत्यु[3]त्तेजि[4]तोत्तेरि[5]तानि च ॥ ३११ ॥
गतयः पञ्च धाराख्या[1]स्तुरङ्गाणां (२)क्रमादिमाः ।
तत्र धौरितकं[1] धौर्यं[2] धोरणं[3] धोरितं[4] च तत् ॥ ३१२ ॥
बभ्रुकङ्कशिखिक्रोडगतिवत्[1] वल्गितं[1] पुनः ।
अग्रकायसमुल्लासात् कुञ्चिकाख्यं[1] नतात्रिकम्[2] ॥ ३१३ ॥
प्लुतं[1] तु लङ्घनं[2] पक्षिमृगगत्यनुदारकम्[3] ।
उत्तेजितं[1] रेचितं[2] स्यान्मध्यवेगेन या गतिः[3] ॥ ३१४ ॥
उत्तेरित[1]मुपकण्ठे[2]लास्कन्दितकं[3]मित्यपि ।
तुप्लुत्योत्प्लुत्यगमनं कोपादिवाखिलैः[5] पदैः ॥ ३१५ ॥
आश्वीनो[1]ऽध्वा स योऽश्वेन दिनेनैकेन गम्यते ।

---

( १ ) लूमशब्दो व्यञ्जननकारान्तः, लूम लूमनी लूम्नी लूमानि, अकारान्तोऽपीति केचित् तन्मते लूमवालधीत्येकं पदम् लूमं लूमे लूमानि । ( २ ) क्रमात् बभ्र्वादिगतिवत् धौरितकादयो भवन्ति यथा बभ्रुगतिवत् धौरितकम् ।

कवी[1] खलीनं[2] कविका[3] कवियं[4] मुखयन्त्रणम्[5] ॥ ३१६ ॥
पञ्चाङ्गी[6] वक्त्रपट्टे तु तलिका[1] तलसारकम्[2] ।
दामञ्चनं(१)[1] पादपाशः प्रक्षरं(२)[1] प्रखरः[2] समौ ॥ ३१७ ॥
चर्म्मदण्डे[1] कशा[2] रश्मौ[1] वल्गा[2] वक्षेपणी[3] कुशा[4] ।
पर्य्याणन्तु[1] पल्ययनं[2] वीतं[1] फल्गु हयद्विपम् ॥ ३१८ ॥
वेसरो[1]ऽश्वतरो[2] वेगसर[3]श्चाथ क्रमेलकः[1] ।
कुलनाशः[2] शिशुनामा(३)[3] शलो[4] भोलि[5]र्मरुप्रियः[6] ॥ ३१९ ॥
मयो[7] महाङ्गो[8] वासन्तो[9] द्विककुद्[10] गेलङ्घनः[11] ।
भूतघ्न[12] उष्ट्रो[13] दाशेरो[14] रवणः[15] कण्टकाशनः[16] ॥ ३२० ॥
दीर्घग्रीवः[17] केलिकीर्णः[18] करभस्तु त्रिहायणः ।
स तु शृङ्खलकः[1] काष्ठमयैः स्यात्पादबन्धनैः ॥ ३२१ ॥
गर्दभस्तु[1] चिरमेही(४)[2] वालेयो[3] रासभः[4] खरः[5] ।
चक्रीवान्[6] शङ्कुकर्णोऽथ ऋषभो[1] वृषभो[2] वृषः[3] ॥ ३२२ ॥
वाडवेयः[4] सौरभेयो[5] भद्रः[6] शक्करशार्क्करौ ।

---

(१) पश्चात्पादबन्धनरज्जूः । (२) अश्वसन्नाहः "प्रक्षरं प्रखरोऽस्त्रियाम्" इति वैजयन्ती । (३) शिशुनामानौ शिशुनामानः । (४) चिरमेहिणौ चिरमेहिणः ।

उक्षोऽनड्वान् ककुद्मान् गौर्बलीवर्दश्च शाक्करः ॥ ३२३ ॥
उक्षा तु जातो जातोक्षः स्कन्धिकः स्कन्धवाहकः ।
महोक्षः स्यादुक्षतरो वृद्धोक्षस्तु जरद्गवः ॥ ३२४ ॥
षण्ढतोचित आर्षभ्यः कूटो भग्नविषाणकः ।
इट्वरो गोपतिः षण्डो गो(२)वृषो मदकोहलः ॥ ३२५ ॥
वत्सः शकृत्करिस्तर्णो दम्यवत्सतरौ समौ ।
नस्योतो नस्तितः षष्टवाट् तु स्याद्युगपार्श्वगः ॥ ३२६ ॥
युगादीनान्तु वोढारो युग्य-प्रासङ्ग्य-शाकटाः ।
स तु सर्वधुरीणः स्यात् सर्वां वहति यो धुरम् ॥ ३२७ ॥
एकधरीणैकधुरावुभावेकधरावहे ।
धुरीण-धुर्य-धौरेय-धौरेयक-धुरन्धराः ॥ ३२८ ॥
धूर्वहेऽथ गलिर्दुष्टवृषः शक्तोप्यधूर्वहः ।
स्थौरी पृष्ठ्यः पृष्ठवाह्यो द्वि(३)दन् षोडन् द्वि-षट्-रदौ ३२९

---

(१) वाहनयोग्यतां प्राप्तः । (२) गौ वृषो मदकोहलः इति वा । (३) द्विदन्तौ द्विदन्तः, षोडन्तौ षोडन्तः, द्विशब्दात् षट्शब्दाच्च रदो योज्यते द्विदन् १ द्विरदः २। षोडन् १ षड्रदः २। अन्ये तु दन्तस्य दत्रादेशे कृते षोडन्निति शब्दांतरं नकारान्तं राजन्शब्दवन्निपातयन्ति

वहः स्कन्धोऽथ ककुदं तु ककुदं नैचिकं शिरः ।
विषाणं कूणिका शृङ्गं सास्ना तु गजकम्बलः ॥ ३३० ॥
गौः सौरभेयी माहेयी मही सुरभिरर्जुनी ।
उस्राऽघ्न्या रोहिणी शृङ्गिण्यनड्वाह्यनडुह्युषा ॥ ३३१ ॥
तम्पा तिलिम्पिका तम्बा सा तु वर्णैरनेकधा ।
पृष्ठौही गर्भिणी वन्ध्या वशा वेहद्(१) वृषोपगा ॥ ३३२ ॥
अवतोका स्रवद्गर्भा वृषाक्रान्ता तु सन्धिनी ।
प्रौढवत्सा बष्कयिणी धेनुस्तु नवसूतिका ॥ ३३३ ॥
परेष्टुर्बहुसूतिः स्यात् गृष्टिः सकृत्प्रसूतिका ।
प्रजने काल्योपसर्या सुखदोह्या तु सुव्रता ॥ ३३४ ॥
दुःखदोह्या तु करटा बहुदुग्धा तु वञ्जुला ।
द्रोणदुग्धा द्रोणदुघा पीनोध्नी पीवरस्तनी ॥ ३३५ ॥
पीतदुग्धा तु धेनुष्या संस्थिता दुग्धबन्धके ।

---

इति हैमबृहद्वृत्तिः, तदा षोडा षोडानौ षोडानः इत्यादि षोडन् षड्दशनः स्मृतः इति हलायुधः, द्वौ समौ, षट् दशना दन्ता यस्य षोडन् स्वार्थे वृद्धौ दणि प्रतादित्वात् षोडत इति तु तट्टीका तदा देववत् षोडत षोडतौ षोडताः इत्यादि । ( १ ) वेहतौ वेहतः स्त्रियाम् ।

नैचिकी[1] तूत्तमा गोषु पलिक्नी[1] बालगर्भिणी ॥ ३३६ ॥
समांसमीना तु सा या प्रतिवर्षं विजायते ।
स्यादचण्डी तु सुकरा वत्सकामा तु वत्सला ॥ ३३७ ॥
चतुस्त्रेहायणी[(१)] द्व्येकाहायन्येकादिवर्षिका ।
आपीनमूधो[(२)] गोविट् तु गोमयं भूमिलेपनम् ॥ ३३८ ॥
तत्र शुष्के तु गोग्रन्थिः करीषं-छगणे अपि ।
गवां सर्वं गव्यं[(३)] व्रजे गोकुलं गोधनं धनम् ॥ ३३९ ॥
प्रजने स्यादुपसरः कीलः पुष्पलकः[(४)] शिवः ।
बन्धनं दाम[(५)] सन्दानं पशुरज्जुस्तु दामनी ॥ ३४० ॥
अजः स्याच्छगलः छागश्छगो बस्तः स्तभः पशुः ।
अजा तु छागिका मज्जा सर्वभक्षा गलस्तनी ॥ ३४१ ॥

---

(१) चतुर्हायणी १ त्रिहायणी २ गोसङ्ख्यादेर्हायनाद्वयसीति ङीप्, चतुस्त्रेहायिनस्य वयसीति णत्वम् । द्विहायनी १ एकहायनी २। (२) ऊधसी ऊधांसि, गोविशौ गोविशः । (३) क्षीरादिकं "गव्यं गोसम्भवं सर्वं" इति हलायुधः । (४) "पुष्पलको गन्धमृगे कीलके क्षपणेऽपि च" इति श्रीधरः । पुष्कलक इत्यपि पाठः (५) दाम दाम्नी दामनी दामानि क्लीबे, दामा दामानौ दामानः स्त्रियाम् ।

युऽवाजो बर्करो[1]ऽव्रौ[1] तु मेषो[2]र्णायु[3]र्हुडो[4]रणोः[5] ।
उरभ्रो[6] मण्ढको[7] वृष्णिरेडको[9] रोमशो[10] हुडुः[11] ॥ ३४२ ॥
सम्फालः[12] शृङ्गिणो[13] भेडो[14] मेषी[1] तु कुररी[2] रुजा[3] ॥
जालकि[4]न्यविला[5]वेण्ये[6]थाडिक्कः[1] शिशु[(1)]वाहकः[2] ॥ ३४३ ॥
पृष्ठशृङ्गो[1] वनाजः[2] स्यादविदुग्धे[1] त्ववेः परम्[(2)] ।
सोढं[2] दूसं[3] मरीसं[4] च कुक्करो[1] वक्रबालधिः[2] ॥ ३४४ ॥
अस्थिभु[3]ग्भषणः[4] सारमेयः[5] कौलेयकः[6] शुनः[7] ।
शुनिः[8] श्वानो[9] गृहमृगः[10] कुकुरो[11] रात्रिजागरः[12] ॥ ३४५ ॥
रसनालिट्[13] रतपरा[(3)]ः कील[14]शायि[15]व्रणा[16]न्दुकाः[17] ।
शालावृको[18] मृगदंशः[19] श्वाऽलर्क[20]स्तु[1] स रोगितः ॥ ३४६ ॥
विश्वकद्रु[1]स्तु कुशलो मृगव्ये सरमा[1] शुनी[2] ।
विट्चरः[1] शूकरे ग्राम्ये महिषो[1] यमवाहनः[2] ॥ ३४७ ॥
रजस्वलो[3] ग्राहरिपु[4]र्लुलायः[5] (लुलापः) सैरिभो[6] महः[7] ।

---

(१) वनछाग इति प्रसिद्धं यस्य नाम । (२) अविसोढं १ अविदूसं २ अविमरीसं । (३) रतकीलः १४ रतशायी १५ रतव्रणः १६ रतान्दुकः १७ ।

धीरस्कन्धः[८] कृष्णशृङ्गो[९] जरन्तो[१०] दंशभीरुकः[११] ॥ ३४८ ॥
रक्ताक्षः[१२] कासरो[१३] हंसकालीतनय[१४]लालिकौ[१५] ।
अरण्यजेऽस्मिन् गवलः[१] सिंहः[१] कण्ठीरवो[२] हरिः[३] ॥ ३४९ ॥
हर्यक्षः[४] केसरी[५] भारिः[६] पञ्चास्यो[७] नखरायुधः[८] ।
महानादः[९] पञ्चशिखः[१०] (१)पारीन्द्रः[११] पत्य[१२]री[१३] मृगात् ॥ ३५० ॥
श्वेसपिङ्गो[१४]प्यथ व्याघ्रो[१] द्वीपी[२] शार्दूल[३]चित्रकौ[४] ।
चित्रकायः[५] पुण्डरीक[६]स्तरक्षुस्तु[१] मृगादनः[२] ॥ ३५१ ॥
शरभः[१] कुञ्जराराति[२]रुत्पादको[३]ऽष्टपाद[४]पि ।
गवयः[१] स्याद्वनगवो[२] गोसदृक्षो[३]ऽश्ववारणः[४] ॥ ३५२ ॥
खड्गी[१] वाध्रीणसः[(२)२] खड्गो[३] गण्डको[४]ऽथ किरः[१] किरिः[२] ।
भूदारः[३] सूकरः[४] कोलो[५] वराहः[६] क्रोडपो[७]त्रिणौ[८] ॥ ५५३ ॥
घोणी[९] घृष्टि[१०]स्तब्धरोमा[११] दंष्ट्री[१२] किट्यो[१३]स्यलाङ्गुलौ[१४] ।

---

( १ ) पारिन्द्रः इत्यपि इति टीका, सिंहे पारीन्द्रपारिन्द्रौ इति शब्द-भेदः, मृगपतिः १२ मृगारिः १३। (२) वाध्रीव नासिकाऽस्य वाध्रीणसः अस्थूलाच्च नस इति नसादेशः ।

आखनिकः शिरोमर्मा स्थूलनासो बहुप्रजः ॥ ३५४ ॥
भाल्लुके भालूकर्क्षाच्छभल्लभल्लूकभल्लुकाः ।
शृगालो जम्बुकः फेरुः फेरण्डः फेरवः शिवा ॥ ३५५ ॥
घोरवासी भूरिमायो गोमायुर्मृगधूर्त्तकः ।
हूरवो भरुजः क्रोष्टा शिवाभेदेऽल्पके किखिः ॥ ३५६ ॥
पृथौ गण्डिवलोपाकौ कोकस्त्वीहामृगो वृकः ।
अरण्यश्वा मर्कटस्तु कपिः कीशः प्लवङ्गमः ॥ ३५७ ॥
प्लवङ्गः प्लवगः शाखामृगो हरिर्बलीमुखः ।
वनौका वानरोऽथासौ गोलाङ्गूलोऽसिताननः ॥ ३५८ ॥
मृगः कुरङ्गः सारङ्गो वातायुर्हरिणावपि ।
मृगभेदा रुरुर्न्यङ्कुरङ्कुर्गोकर्णशम्बराः ॥ ५५९ ॥
चमूरुचीनचमराः समूरैणर्श्यरौहिषाः ।
कदली कन्दली (१) कृष्णशारः पृषतरोहितौ ॥ ३६० ॥

---

(१) कृष्णेन वर्णेन शरः शबलः कृष्णशारः इति टीका, मृगभेदे कृष्णसारकालसारौ सदन्त्यकौ सतालव्यौ च इति शब्दभेदनाममाला ।

(१) दक्षिणेर्मा तु स मृगो यो व्याधैर्दक्षिणे क्षतः ।
वातप्रमीर्वातमृगः शशस्तु मृगलोमकः ॥ ३६१ ॥
शूलिको लोमकर्णोऽथ शल्ये तु शलशल्यकौ ।
श्वाविच्च तच्छलाकायां शललं शलमित्यपि ॥ ३६२ ॥
गोधा निहाको गौधेरगौधारौ दुष्टतत्सुते ।
गौधेयोऽ(३)न्यत्र मुशली गोधिकागोलिके गृहात् ॥ ३६३ ॥
माणिक्यभित्तिका पल्ली कुड्यमत्स्यो गृहोलिका ॥
स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहलः ॥ ३६४ ॥
स्थूलाञ्जनाधिकायान्तु ब्राह्मणी रक्तपुच्छिका ।
कृकलासस्तु सरटः प्रतिसूर्यः शयानकः ॥ ३६५ ॥
मूषिको मूषको वज्रदशनः खनकोन्दुरौ ।
उन्दुरुर्वृषं आखुश्च सूच्यास्यो वृषलोचने ॥ ३६६ ॥
छुछुन्दरी गन्धमूष्यां गिरिका बालमूषिका ।
विडाले ओतुर्मार्जारो हीकुश्च वृषदंशकः ॥ ३६७ ॥

---

(१) दक्षिणे इर्मं व्रणं यस्य, दक्षिणेर्माणौ दक्षिणेर्माणः । (२) शल्लं शलमिति द्वौ तालव्याद्यस्वराद्यौ । (३) दुष्टादन्यत्र । (४) गृहगोधिका १ गृहगोलिका २ ।

जाहकी गात्रसङ्कोची मण्डली नकुलः पुनः ।
पिङ्गलः सर्पहा बभ्रुः सर्पोहिः पवनाशनः ॥ ३६८ ॥

भोगी भुजङ्गभुजगावुरगो द्विजिह्व-
व्यालौ भुजङ्गमसरीसृपदीर्घजिह्वाः ।
काकोदरो विषधरः फणभृत् पृदाकु-
र्दृक्कर्णकुण्डलिबिलेशयदन्दशूकाः ॥ ३६९ ॥

दर्वीकरः कञ्चुकिचक्रिगूढ-
पात्पन्नगौ जिह्मगलेलिहानौ ।
कुम्भीनसाशीविषदीर्घपृष्ठाः
स्याद्राजसर्पस्तु भुजङ्गभोजी ॥ ३७० ॥

चक्रमण्डल्यजगरः पारीन्द्रो वाहसः शयुः ।
असगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ ३७१ ॥
भवेत्तिलित्सो गोनासो गोनसो घोणसोऽपि च ।
कुक्कुटाहिः कुक्कुटाभो वर्णेन च रवेण च ॥ ३७२ ॥
नागाः पुनः काद्रवेयास्तेषां ( भोगवती ) भोगावती पुरी ।
शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः ॥ ३७३ ॥

स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः ।
वासुकिस्तु सर्पराजः श्वेतो नीलसरोजवान् ॥ ३७४ ॥
तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।
महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः ॥ ३७५ ॥
शङ्खस्तु पीतो बिभ्राणो रेखामिन्दुसितां गले ।
कुलिकोऽर्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥ ३७६ ॥
अथ कम्बलाश्वतरधृतराष्ट्रबलाहकाः ।
इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥ ३७७ ॥
निर्मुक्तो मुक्तनिर्मोकः सविषा निर्विषाश्च ते ।
नागाः स्युर्दृग्विषा लूमविषास्तु वृश्चिकादयः ॥ ३७८ ॥
व्याघ्रादयो लोमविषा नखविषा नरादयः ।
लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः ॥ ३७९ ॥
मूषिकाद्या दूषीविषं (२) त्ववीर्यमौषधादिभिः ।
कृत्रिमं तु विषं चारं गरश्चोपविषं च तत् ॥ ३८० ॥

---

( १ ) विषेण सहिताः सर्पा नागादयः निर्विषा अजगरादयः । ( २ ) यत् औषधमन्त्रप्रयोगादिभिः अवीर्यं भवति तद् दूषीविषमित्युच्यते ।

भोगो हि कायो दंष्ट्रा[(१)]शी दर्वी भोगः फटः स्फुटः ।
फणोऽहिकोशे तु निर्ल्वयनी निर्मोककञ्चुकौ ॥ ३८१ ॥

इत्यहिकायः ।

विहगो विहङ्गमखगौ पतगो विहङ्गः ।
शकुनिः शकुन्तिशकुनौ वि[(२)]र्वयःशकुन्तौः ।
नभसङ्गमो विकिरपत्ररथौ विहा[(३)]यो
द्विजपक्षिविष्किरपत[(४)]त्रिपतत्पतङ्गाः ॥ ३८२ ॥
पित्सन्नी[(५)]डाण्डजोऽगौकोश्चञ्चुश्चञ्चूः सृपाटिका ।
त्रोटिश्च पत्रं पतत्रं पिच्छं वाजस्तनूरुहम् ॥ ३८३ ॥
पक्षो ग[(६)]रुच्छदश्चापि पक्षमूलं तु पक्षतिः ।
प्रनीडोड्डीनसण्डीनडयनानि नभोगतौ ॥ ३८४ ॥

---

( १ ) आशिषौ आशिषः स्त्रीलिङ्गे दन्त्यान्त्यः । ( २ ) स्त्रियां वी व्यौ व्यः नदीवत्, विः वी वयः, वयसी वयांसि क्लीबे । (३) विहायाः विहायसौ विहायसः । ( ४ ) पतत्री इन्नन्तः पतत् पतन्तौ पतन्तः । ( ५ ) नीडजः १ अण्डजः २ अगौकाः सान्तः । ( ६ ) गरुतौ गरुतः पुंसि गरुती गरून्ति क्लीबे ।

पेशी(१) कोशोऽण्डे कुलायो नीडे केकी तु सर्पभुक् ।
मयूरबर्हिणौ नीलकण्ठो मेघसुहृच्छिखी ॥ ३८५ ॥
शुक्लापाङ्गोऽस्य वाक् केका पिच्छं(२) बर्हं शिखण्डकः ।
प्रचलाकः कलापश्च मेचकश्चन्द्रकः समौ ॥ ३८६ ॥
वनप्रियः परभृतस्ताम्राक्षः कोकिलः पिकः ।
कलकण्ठः काकपुष्टः काकोऽरिष्टः सकृत्प्रजः ॥ ३८७ ॥
आत्मघोषश्चिरजीवी घूकारिः करटो द्विकः ।
एकदृक् बलिभुक् ध्वाङ्क्षो मौकुलिर्वायसोऽन्यभृत्(३) ॥३८८॥
वृद्धद्रोणदग्धकृष्णपर्वतेभ्यस्त्वसौ(४) परः ।
पवनाश्रयश्च काकोलो मद्गुस्तु जलवायसः ॥ ३८९ ॥
घूके निशाटः काकारिः कौशिकोलूकपेचकाः ।
दिवान्धोऽथ निशावेदी कुक्कुटश्चरणायुधः ॥ ३९० ॥

---

(१) पेशी १ कोशः २ अण्डः ३ नामत्रयमित्यन्ये । (२) पिच्छमिति विशेषणं तेन बर्हादीनि चत्वार्येव नामानीत्यन्ये । (३) अन्यभृतौ अन्यभृतः । (४) वृद्धकाकः १ द्रोणकाकः २ दग्धकाकः ३ कृष्णकाकः ४ पर्वतकाकः ५ ।

कृकवाकुस्ताम्रचूडो विवृताक्षः[1] शिखण्डकः ।
हंसाश्चक्राङ्गवक्राङ्गमानसौकःसितच्छदाः ॥ ३९१ ॥
राजहंसास्त्वमी चञ्चुचरणैरतिलोहितैः ।
मल्लिकाक्षास्तु[2] मलिनैर्धार्तराष्ट्राः सितेतरैः ॥ ३९२ ॥
कादम्बास्तु कलहंसाः पक्षैः स्युरतिधूसरैः ।
वारला नरला हंसी वारटा वरटा च सा ॥ ३९३ ॥
दार्वाघाटः शतपत्रः खञ्जरीटस्तु खञ्जनः ।
सारसस्तु लक्ष्मणः स्यात् पुष्कराख्यः कुरङ्करः ॥ ३९४ ॥
सारसी लक्ष्मणाथ कुङ्[3] क्रौञ्चे चाषे किकीदिविः ।
चातकः स्तोकको बप्पीहः सारङ्गो नभोऽम्बुपः ॥३९५॥
चक्रवाको रथाङ्गाह्वः कोको द्वन्द्वचरोऽपि च ।
टिट्टिभस्तु कटुकाण उत्पादशयनश्च सः ॥ ३९६ ॥
चटको गृहबलिभुक् कलविङ्कः कुविङ्ककः ।
तस्य योषित्तु चटका स्त्र्यपत्ये चटका तयोः ॥ ३९७ ॥

---

(१) विवृते अक्षिणी अस्य विवृताक्षः इति टीका । (२) मल्लिकाकारे अक्षिणी एषामिति मल्लिकाक्षाः शुक्लापाङ्गत्वात् इति टीकाकारः । (३) क्रुञ्चौ क्रुञ्चः ।

पुमपत्ये चाटकैरो[1] दात्यूहे[1] कालकण्टकः(१)[2] ।
जलरङ्कु[3]र्जलरङ्को[4] बके[1] कह्वो[2] बकोटवत्[3] ॥ ३९८ ॥
बलाहकः[1] स्याद्बलाको[2] बलाका[1] बिसकण्ठिका[2] ।
भङ्गः[1] कलिङ्गो[2] धूम्याटः[3] कङ्कस्तु[1] कमनच्छदः[2] ॥ ३९९ ॥
लोहपृष्ठो[3] दीर्घपादः[4] कर्कटः[5] स्कन्धमल्लकः[6] ।
चिल्लः[1] शकुनि[2]रातापी[3] श्येनः[1] पत्री[2] शशादनः[3] ॥ ४०० ॥
दाक्षाय्यो[1] दूरदृक्[2] गृध्रो[3]ऽथोत्क्रोशो[1] मत्स्यनाशनः[2] ।
कुररः[3] कीरस्तु[1] शुको[2] रक्ततुण्डः[3] फलादनः[4] ४०१ ॥
शारिका[1] तु पीतपादा[2] गोराटी[3] गोकिराटिका[4] ।
स्याच्चर्म्मचटिकायां[1] तु जतुका[2]ऽजिनपत्रिका[3] ॥ ४०२ ॥
वल्गुलिका[1] मुखविष्ठा[2] परोष्णी[3] तैलपायिका[4] ।
कर्करेटुः[1] करेटुः[2] स्यात् करटुः[3] कर्कराटुकः[4] ॥ ४०३ ॥
आटि[1]रातिः[2] शरारिः[3] स्यात् कृकण[1]क्रकरौ(२)[2] समौ ।

---

(१) कालः कण्टका रोमोद्भेदोऽस्य कालकण्टकः, कालः कण्ठोऽस्य कालकण्ठ इत्यन्ये । शब्दभेदे तु "जलरङ्कौ जलरङ्कः कालात्कण्टककण्ठकौ" इति । (२) गोरतित्तिरिः इत्यस्य टीका, शब्दरत्नाकरे तु कृकणक्रकरावुभौ कपिञ्जले इति ।

भासे[1] शकुन्तः[2] कोयष्टौ[1] शिखरी[2] जलकुक्कुभः[3] ॥ ४०४ ॥
पारावतः[1] कलरवः[2] कपोतो[3] रक्तलोचनः[4] ।
ज्योत्स्नाप्रिये[1] चलचञ्चु[2]चकोरो[3]विषसूचकः[4] ॥ ४०५ ॥
जीवंजीवस्तु[1] गुन्द्रालो[2] विषदर्शनमृत्युकः[3] ।
व्याघ्राटस्तु[1] भरद्वाजः[2] प्लवस्तु[1] गात्रसंप्लवः[2] ॥ ४०६ ॥
तित्तिरिस्तु[1] खरकोणो[2] हारीतस्तु[1] मृदङ्कुरः[2] ।
कारण्डवस्तु[1] मरुलः[2] सुगृह[1]श्चञ्चुसूचिकः[2] ॥ ४०७ ॥
कुम्भकारकुक्कुटस्तु[1] कुक्कुभः[2] कुहकस्वनः[3] ।
पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः[1] ॥ ४०८ ॥
छेकौ[1] गृह्याश्च[2] ते गेहासक्ता ये मृगपक्षिणः ।

इति पञ्चेन्द्रियाः ।

मत्स्यो[1] मीनः[2] पृथुरोमा[3] झषो[4] वैसारिणो[5]ऽण्डजः[6] ॥ ४०९ ॥
सङ्घचारी[7] स्थिरजिह्व[8] आत्माशी[9] स्वकुलक्षयः[10] ।
विसारः[11] शकली[12] शल्की[13] शम्बरो[14]ऽनिमिष[15]स्तिमिः[16] ॥ ४१० ॥
सहस्रदंष्ट्रे[1] वादालः[2] पाठीने[1] चित्रवल्लिकः[2] ।
शकुले[1] स्यात्कलको[2]ऽथ गडकः[1] शकुलार्भकः[2] ॥ ४११ ॥

उलूपी[१] शिशुके[२] प्रोष्ठी[१] शफरः[२] श्वेतकोलके[३] ।
नलमीनश्चिलिचिमो[२] मत्स्यराज[१]स्तु रोहितः[२] ॥ ४१२ ॥
मद्गुर[१]स्तु राजशृङ्गः[२] शृङ्गी[१] तु मङ्गुरप्रियौ[२] ।
क्षुद्राण्डमत्स्यजातं तु पोताधानं[१] जलाणुकम्[(१)२] ॥ ४१३ ॥
महामत्स्या[१]स्तु चीरल्लितिमिङ्गिलगिलादयः ।
अथ यादांसि[१] नक्राद्या हिंसका जलजन्तवः ॥ ४१४ ॥
नक्रः[१] कुम्भीरः[२] आलास्यः[३] कुम्भी[४] महामुखोऽपि[५] च ।
तालुजिह्वः[६] शङ्कुमुखो[७] गोमुखो[८] जलसूकरः[९] ॥ ४१५ ॥
शिशुमार[१]स्त्वम्बुकूर्म[२] उष्णवीर्यो[३] महावसः[४] ।
उद्र[१]स्तु जलमार्जारः[२] पानीयनकुलो[३] वशी[४] ॥ ४१६ ॥
ग्राहे[१] तन्तु[२]स्तन्तुनागो[३]ऽवहारो[४] नाग[५]तन्तुणौ[६] ।
अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ ४१७ ॥
कुलीरः[१] कर्कटः[२] पिङ्गचक्षुः[३] पार्श्वोदरप्रियः[४] ।
द्विधागतिः[५] षोडशाङ्घ्रिः[६] कुरचिल्लो[७] बहिश्चरः[८] ॥ ४१८ ॥
कच्छपः[१] कमठः[२] कूर्मः[३] क्रोडपाद[४]श्चतुर्गतिः[५] ।

---

( १ ) नले अणति जलाणुकं कण्येणिरिति णिडुकः ।

पञ्चाङ्गगुप्तदौलेयौ जीवथः कच्छपी दुली ॥ ४१९ ॥
मण्डूके हरिशालूरप्लवभेकप्लवङ्गमाः ।
वर्षाभूः प्लवगः शालुरजिह्वव्यङ्गदर्दुराः ॥ ४२० ॥
स्थले नरादयो ये तु ते जले जल(१)पूर्वकाः ।
अण्डजाः पक्षिसर्पाद्याः पोत(२)जाः कुञ्जरादयः ॥ ४२१ ॥
रस(३)जा मद्यकीटाद्या नृगवाद्या जरायुजाः ।
यूकाद्याः स्वेदजा मत्स्यादयः सम्मूर्च्छनो(४)द्भवाः ॥ ४२२ ॥
खञ्जनास्तू(५)द्भिदोऽथोपपादुका देवनारकाः ।
त्रसयोनय इत्य(६)ष्टावुद्भिदुद्भिज्जमुद्भिजम् ॥ ४२३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां तिर्य्यक्काण्डश्चतुर्थः ॥ ४ ॥

---

(१) जलशब्दः पूर्वो येषां, यथा जलनरः, जलहस्ती, जलतुरगः एवं अम्बुनरः, तोयकरी, नीरघोटक इत्यादि । (२) पोतो नाम जरायु रहितो गर्भः । (३) रसाज्जायन्ते इति रसजाः आदिना घृतकीटाद्याः । (४) सम्मूर्च्छनादुद्भवो येषां सम्मूर्च्छजा इत्यर्थः । आदिना सर्पादयो गृह्यन्ते । (५) उद्भवति भुवमिति क्विपि उद्भिदः बहुवचनादन्येऽपि शलभादयः, उपपद्यन्ते स्वयमिति एवंशील उपपादुकाः । (६) त्रसानां जीवानां योनय उत्पत्तिस्थानानि अष्टावण्डजादयः ।

## अथ नरककाण्डः ।

स्युर्नारकास्तु परेतप्रेतयात्यातिवाहिकाः ।
आजूर्विष्टिर्यातना तु कारणा तीव्रवेदना ॥ १ ॥
नरकस्तु नारकः स्यान्निरयो दुर्गतिश्च सः ।
घनोदधि[(१)]घनवाततनुवातनभःस्थिताः ॥ २ ॥
रत्नशर्करावालुकापङ्कधूमतमः[(२)]प्रभाः ।
महातमःप्रभा चेत्यधोधो नरकभूमयः ॥ ३ ॥
क्रमात्पृथुतरा सप्ता[(३)]थ त्रिंशत्पञ्चविंशतिः[(४)] ।
पञ्चदश दश त्रीणि लक्षाण्यूनं च पञ्चभिः ॥ ४ ॥
लक्षं पञ्च च[(५)] नरकावासाः सीमन्तकादयः ।

---

(१) घनो निबिड उदधिः । एवं घनश्चासौ वातश्च । तनुश्चासौ वातश्च। नभ आकाशः, घनोदध्यादिषु प्रत्येकमवस्थिताः क्रमात् पृथुतराः अधोऽधो रत्नप्रभाद्याः सप्त नरकभूमयो भवन्ति । (२) रत्नप्रभा १ शर्कराप्रभा २ वालुकाप्रभा ३ पङ्कप्रभा ४ धूमप्रभा ५ तमःप्रभा ६ महातमःप्रभा क्रमेण रत्नप्रभाद्यासु सप्तनरकभूमिषु नरकवाससंख्यामाह अथेत्यारभ्य । (३) रत्नप्रभायां, (४) शर्कराप्रभायां, (५) वालुकाप्रभायां, पंकप्रभायां ःप्रभायां, महातमःप्रभायां ।

एतासु[1] स्युः क्रमेणाथ पातालं[1] वडवामुखम्[2] ॥ ५ ॥
बलिवेश्मा[3]धोभुवनं[4] नागलोको[5] रसातलम्[6] ।
रन्ध्रं[1] बिलं[2] निर्व्यथनं[4] कुहरं[5] शुषिरं[5] शुषिः[6] ॥ ६ ॥
छिद्रं[7] रोपं[8] विवरं[9] च निम्नं[10] रोकं[11] वपान्तरम्[12] ।
गर्त्तश्व[1]भ्रा[2]वटा[3]गाधदरा[4]स्तु[5] विवरे भुवः ॥ ७ ॥

इत्याचार्य्यश्रीहेमचन्द्रविरचिताया-
मभिधानचिन्तामणौ नाममालायां
नरककाण्डः पञ्चमः ॥ ५ ॥

---

( १ ) एतासु नरकभूमिषु क्रमेण उक्तसंख्यकाः सीमंतकाद्यो नरकावासा भवंति सीमंतको नाम रत्नप्रभाभूमिमध्यवर्ती नरकेन्द्रः ।

# अथ सामान्यकाण्डः ।

स्याल्लोको विष्टपं विश्वं भुवनं जगती जगत् ।
जीवाजीवाधारक्षेत्रं लोकोऽलोकस्ततोऽन्यथा ॥ १ ॥
क्षेत्रज्ञ आत्मा पुरुषश्चेतनः स पुनर्भवी[(1)] ।
जीवः स्यादसुमान् सत्वं देहभृज्जन्युजन्तवः ॥ २ ॥
उत्पत्तिर्जन्म[(2)] जनुषी जननं जनिरुद्भवः ।
जीवेऽसुजीवितप्राणा जीवातु जीवनौषधम् ॥ ३ ॥
श्वासस्तु श्वसितं सोन्तर्मुख उच्छ्वास आहरः ।
आनो बहिर्मुखस्तु स्यान्निःश्वासः पान एतनः ॥ ४ ॥
आयुर्जीवितकालोऽन्तःकरणं मानसं मनः ।
हृच्चेतो हृदयं चित्तं स्वान्तं[(3)] गूढपथोच्चले ॥ ५ ॥
मनसः कर्म सङ्कल्पः स्यादथो शर्म निर्वृतिः ।
सातं सौख्यं सुखं दुःखं त्वसुखं वेदना व्यथा ॥ ६ ॥
पीडा बाधार्त्तिराभीलं कृच्छ्रं कष्टं प्रसूतिजम् ।

---

(१) भविनौ भविनः । (२) जन्म नान्तोऽदन्तश्च । (३) सान्तमित्यपि पाठः ।

आमनस्यं[12] प्रगाढं[13] च स्यादाधिर्मानसी व्यथा ॥ ७ ॥
सपत्नाकृति[1]निष्पत्राकृती[2] त्वत्यन्तपीडने ।
क्षुज्जाठराग्निजा पीडा व्यापादो[1] द्रोहचिन्तनम् ॥ ८ ॥
उपज्ञा[1] ज्ञानमाद्यं स्याच्चर्चा[1] सङ्ख्या[2] विचारणा[3] ।
वासना[1] भावना[2] संस्कारो[3]ऽनुभूताद्यविस्मृतिः ॥ ९ ॥
निर्णयो[1] निश्चयो[2]ऽन्तः[3] सम्प्रधारणा[4] समर्थनम्[5] ।
अविद्या[1]ऽहम्मति[2]रज्ञाने[3] भ्रान्ति[1]र्मिथ्यामति[2]र्भ्रमः[3] ॥ १० ॥
सन्देह[1]द्वापरौ[2]ऽरेका[3] विचिकित्सा[4] च संशयः[5] ।
परभागो[1] गुणोत्कर्षो[2] दोषे[1] त्वादीनवाश्रवौ[2] ॥ ११ ॥
स्याद् रूपं[1] लक्षणं[2] भावश्चा[3]त्म[4]प्रकृति[5]रीतयः[6] ।
सहजो[7] रूपतत्त्वं[8] च धर्म[9]सर्गौ[10] निसर्गवत्[11] ॥ १२ ॥
शीलं[12] सतत्त्वं[13] संसिद्धि[14]रवस्था[1] तु दशा[2] स्थितिः[3] ।
स्नेहः[1] प्रीतिः[2] प्रेम[3]हार्दं[4] दाक्षिण्यं[1] त्वनुकूलता[2] ॥ १३ ॥
विप्रतिसारो[1]ऽनुशयः[2] पश्चात्तापो[3]ऽनुतापश्च[4] ।
अवधान[1]समाधान[2]प्रणिधानानि[3] तु समाधौ[4] स्युः ॥ १४ ॥
धर्मः[1] पुण्यं[2] वृषः[3] श्रेयः[4] सुकृते[5] नियतौ[1] विधिः[2] ।

---

(१) युक्तायुक्तपरीक्षायाः ।

दैवं भाग्यं भागधेयं दिष्टं चायस्तु तच्छुभम् ॥ १५ ॥
अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यादथाशुभम् ।
दुष्कृतं दुरितं पाप्मेनः पाप्मा च पातकम् ॥ १६ ॥
किल्बिषं कलुषं किण्वं कल्मषं वृजिनं तमः ।
अंहः कल्कमघं पङ्कं उपाधिर्धर्मचिन्तनम् ॥ १७ ॥
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गः समोक्षकाः ।
बल(१)तुर्याश्चतुर्भद्रं प्रमादोऽनवधानता ॥ १८ ॥
(२)छन्दोऽभिप्राय आकूतं मतभावाशया अपि ।
हृषीकमक्षं करणं श्रोतः खं विषयीन्द्रियम् ॥ १९ ॥
बुद्धीन्द्रियं स्पर्शनादि पाण्यादि तु क्रियेन्द्रियम् ।
स्पर्शादयस्त्विन्द्रियार्था विषया गोचरा अपि ॥ २० ॥
शीते तुषारः शिशिरः सु(३)शीमः शीतलो जडः ।
हिमोऽथोष्णे तिग्मस्तीव्रस्तीक्ष्णश्चण्डः खरः पटुः ॥ २१ ॥
कोष्णः कवोष्णः कदुष्णो मन्दोष्णश्चेषदुष्णवत् ।
निष्ठुरः कक्खटः क्रूरः परुषः कर्कशः खरः ॥ २२ ॥

---

(१) बलं तुर्यं येषां ते धर्मकामार्थबलानीत्यर्थः । (२) छन्दः अदन्तो देववत् । (३) सुषीम इत्यपि ।

दृढः[7] कठोरः[8] कठिनो[9] जरठः[1][10] कोमलः[1] पुनः ।
मृदुलो[2] मृदु[3]सोमाल[4]सुकुमारो[5] अकर्कशः[6] ॥ २३ ॥
मधुरस्तु[1] रसज्येष्ठो[2] गुल्यः[3] स्वादु[4]र्मधूलकः[5] ।
अम्लस्तु[1] पाचनो[2] दन्तशठो[3]ऽथ लवणः[1] सरः[2] ॥ २४ ॥
सर्वरसो[3]ऽथ कटुः[1] स्यादोषणो[2] मुखशोधनः[3] ।
वक्त्रभेदी[1] तु तिक्तो[2]ऽथ कषायस्तु[1]वरो[2] रसाः[1] ॥ २५ ॥
गन्धो[1] जनमनोहारी[2] सुरभि[1]र्घ्राणतर्पणः[2] ।
समाकर्षी[3] निर्हारी[4] च स आमोदो[1] विदूरगः[2] ॥ २६ ॥
विमर्दोत्थः परिमलो[1]ऽथामोदी[1] मुखवासनः[2] ।
इष्टगन्धः[3] सुगन्धिश्च[4] दुर्गन्धिः[1] पूतिगन्धिकः[2] ॥ २७ ॥
आमगन्धितु विस्रं[2] स्याद्वर्णाः[1] श्वेतादिका अमी ।
श्वेतः[1] श्येतः[2] सितः[3] शुक्लो[4] हरिणो[5] विशदः[6] शुचिः[7] ॥२८॥
अवदात[8]गौर[9]शुभ्र[10]वलक्ष[11]धवला[12]ऽर्जुनाः[13] ।
पाण्डुरः[14] पाण्डरः[15] पाण्डु[16]रीषत्पाण्डुस्तु धूसरः[1] ॥ २९ ॥
कापोतस्तु[1] कपोताभः[2] पीतस्तु[1] सितरञ्जनः[2] ।
हारिद्रः[3] पीतलो[4] गौरः[5] पीतनीलः[1] पुनर्हरित्[2] ॥ ३० ॥

---

(१) जरट इत्यपि ।

पालाशो[२] हरितस्तालकाभो[३] रक्तस्तु[१] रोहितः[२] ।
माञ्जिष्ठो[३] लोहितः[४] शोणः[५] श्वेतरक्तस्तु[१] पाटलः[२] ॥ ३१ ॥
अरुणो[१] बालसन्ध्याभः[२] पीतरक्तस्तु[१] पिञ्जरः[२] ।
कपिलः[३] पिङ्गलः[४] श्यावः[५] पिशङ्गः[६] कपिशो[७] हरिः[८] ॥ ३२ ॥
बभ्रुः[९] कद्रुः[१०] कडारश्च[११] पिङ्गे[१२] कृष्णस्तु[१] मेचकः[२] ।
स्याद्रामः[३] श्यामलः[४] श्यामः[५] कालो[६] नीलो[७]ऽसितः[८] शितिः[९] ॥ ३३ ॥
रक्तश्यामे[१] पुनर्धूम्र[२]धूमलावथ[३] कर्बुरः[१] ।
किर्मीरे[२] एतः[३] शबल[४]श्चित्र[५]कल्माष[६]चित्रलाः[७] ॥ ३४ ॥
शब्दो[१] निनादो[२] निर्घोषः[३] स्वानो[४] ध्वानः[५] स्वरो[६] ध्वनिः[७] ।
निर्ह्रादो[८] निनदो[९] ह्रादो[१०] निःस्वानो[१२] निःस्वनः[१२] स्वनः[१३] ॥ ३५ ॥
रवो[१४] नादः[१५] स्वनिर्घोषः[१६] सं[१७]व्या[१८]ङ्भ्यो[१९](१) राव[२०] आरवः[२१] ।
क्वणनं[२२] निक्वणः[२३] क्वाणो[२४] निक्वाणश्च[२५] क्वणो[२६] रणः[२७] ॥ ३६ ॥
षड्ज[१]र्षभ[२]गान्धारा[३] मध्यमः[४] पञ्चमस्तथा[५] ।
धैवतो[६] निषधः[७] सप्त तन्त्रीकण्ठोद्भवाः स्वराः ॥ ३७ ॥
(२) ते मन्द्र[१]मध्य[२]ताराः[३] स्युरुरः[१]कण्ठ[२]शिरोभवाः[३] ।

---

(१) संरावः १ विरावः २ आरावः ३ । (२) ते ऋषभादयः सप्त

रुदितं[1] क्रन्दितं[2] क्रुष्टं[3] तदपुष्टं तु गह्वरं[1] ॥ ३८ ॥
शब्दो गुणानुरागोत्थः प्रणादः[1] सीत्कृतं[2] नृणाम् ।
पर्दनं[1] गुदजे शब्दे कर्दनं[1] कुक्षिसंभवे ॥ ३९ ॥
क्ष्वेडा[1] तु सिंहनादो[2]ऽथ क्रन्दनं[1] सुभटध्वनिः ।
कोलाहलः[1] कलकलस्[2]तुमुलो[1] व्याकुलो रवः ॥ ४० ॥
मर्मरो[1] वस्त्रपर्णादेर्भूषणानां तु शिञ्जितम्[1] ।
हेषा[1] ह्रेषा[2] तुरगाणां गजानां गर्ज्ज[1]बृंहिते[2] ॥ ४१ ॥
विस्फारो[1] धनुषां हम्भा[1]रम्भे[2] गोर्जलदस्य तु ।
स्तनितं[1] गर्जितं[2] गर्ज्जि[3]ः स्वनितं[4] रसितादि च ॥ ४२ ॥
कूजितं[1] स्याद्विहङ्गानां तिरश्चां रुतवासिते[2] ।
वृषस्य रेषणं[1] रेषा[2] बुक्कणं[1] भषणं[2] शुनः ॥ ४३ ॥
(१) पीडितानां तु क्वणितं[1] मणितं[1] रतिकूजितम्(२) ।
प्रक्वाणः[1] प्रक्वणस्[2]तन्त्र्या मर्दलस्य तु गुम्दलः[1] ॥ ४४ ॥

---

स्वराः प्रत्येकं उरःकण्ठशिरोभवाः सन्तः मन्द्रमध्यताराः स्युः तत्र दन्तिलः "नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः । स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते" इति । (१) व्याधिप्रहारादिभिः पीडितानाम् । (२) रतौ सुरते दंपत्योः कूजितं अव्यक्तशब्दः ।

क्षीजनं[१] तु कीचकानां भेर्या नादस्तु दर्दुरः[१] ।
तारोऽत्युच्चैर्ध्वनिर्मन्द्रो[१] गम्भीरो मधुरः कलः[१] ॥ ४५ ॥
काकली[१] तु कलः सूक्ष्म एकतालो[१] लयानुगः ।
काकुर्ध्वनिविकारः[१] स्यात्प्रतिश्रुत्तु[१] प्रतिध्वनिः[२] ॥ ४६ ॥
सङ्घाते[१] प्रकरौघवारनिकरव्यूहाः समूहश्चयः ।
सन्दोहः समुदायराशिविसरव्राताः कलापो[१४] व्रजः[१५] ।
कूटं[१६] मण्डलचक्रवालपटलस्तोमा गणः पेटकम्[२२]
वृन्दं[२३] चक्रकदम्बके[२५] समुदयः[२६] पुञ्जोत्करौ[२८] संहतिः[२९] ४७
समवायो[३०] निकुरम्बं[३१] जालं[३२] निवहसञ्चयौ[३४] ।
जातं[३५] तिरश्चां तद्यूथं[१] सङ्घसार्थौ[२] तु देहिनाम् ॥ ४८ ॥
कुलं[१] तेषां सजातीनां निकायस्तु[१] सधर्मिणाम् ।
वर्गस्तु[१] सदृशां स्कन्धो[१] नरकुञ्जरवाजिनाम् ॥ ४९ ॥
ग्रामो[१] विषयशब्दास्त्रभूतेन्द्रियगणाद्व्रजे(२) ।
समजस्तु[१] पशूनां स्यात्समाजस्त्वन्यदेहिनाम्[२] ॥ ५० ॥
शुकादीनां गणे शौकमायूरतैत्तिरादयः[१] ।

---

(१) अभिन्नकालमानशब्दस्य । ( २ ) विषयग्रामः, शब्दग्रामः, अस्त्रग्रामः, भूतग्रामः, इन्द्रियग्रामः, गुणग्रामः ।

भिक्षादेर्भैक्ष[1]साहस्र[1]गार्भिण[1]यौवतादयः ॥ ५१ ॥

गोत्रार्थप्रत्ययान्तानां स्युरौपगवकादयः[(1)] ।

उक्षादेरौक्षकं[1] मानुष्यकं[1] वार्द्धकमौष्ट्रकम्[1] ॥ ५२ ॥

स्याद्राजपुत्रकं[1] राजन्यकं[1] राजकमाजकम्[1] ।

वात्सकौरभ्रके[1] कावचिकं[1] कवचिनामपि ॥ ५३ ॥

हास्तिकं[1] तु हस्तिनां स्यादापूपिकाद्यचेतसाम् ।

धेनूनां धैनुकं[1] धैन्वन्तानां[(2)] गौधेनुकादयः ॥ ५४ ॥

कैदारकं[1] कैदारिकं[2] कैदार्यमपि[3] तद्गणे ।

ब्राह्मणादेर्ब्राह्मण्यं[1] माणव्यं[2] वाडव्यमित्यपि[3] ॥ ५५ ॥

गणिकानां तु गाणिक्यं[1] केशानां कैश्यकैशिके[2] ।

अश्वानामाश्वमश्वीयं[2] पर्शूनां पार्श्वमप्यथ ॥ ५६ ॥

वातूलवात्ये[2] वातानां गव्यागोत्रे[2] पुनर्गवाम् ।

---

(१) उपगोरपत्यानि औपगवाः तेषां वृन्दं औपगवकं आदिना गार्गकं इत्यादयः । (२) धेनुशब्दः अन्ते येषां ते धन्वन्ताः तेषां गोशब्दः सामान्येन सौरभिपर्य्यायः, धेनुशब्दस्तु "धेनुस्तु नवसूतिका" इत्युक्तत्वात् नवप्रसूतगोपर्य्यायः अतः गोधेनूनां वृन्दं गौधेनुकं आदिना सौरभिधेनुकं इत्यादि ।

पाश्या(१)[1]खल्यादि पाशादेः खलादेः खलिनी[2]निभाः ॥ ५७ ॥
जनता[1] बन्धुता[1] ग्रामता[1] गजता[1] सहायता[1] ।
जनादीनां रथानां तु स्याद्रथ्या[1] रथकड्या[2](२) ॥ ५८ ॥
राजि[1]र्लेखा[2] तति[3]र्वीथी[4] माला[5]ल्या[6]वलि[7]पङ्क्तयः[8] ।
धोरणी[9] श्रेण्यु[10]भौ[1] तु द्वौ[2] युगलं[1] द्वितयं[2] द्वयम्[3] ॥ ५९ ॥
युगं[4] द्वैतं[5] यमं[6] द्वन्द्वं[7] युग्मं[8] यमल[9]यामले[10] ।
पशुभ्यो[1] गोयुगं युग्मे परं षट्त्वे तु षड्गवम्(३)[1] ॥ ६० ॥
परःशताद्या(४)स्ते येषां परा सङ्ख्या शतादिकात्[1] ।

---

(१) गण्या इति पाठः, गलो बृहत्काशस्तेषां समूहः । (२) रथकट्याया इति वा । (३) द्वित्वे गोयुगः, षट्त्वे षड्गवः, इति द्वे सूत्रे गोयुगमिति अक्षयत्रयात्मकः प्रत्ययः, पशुनामभ्यः परं अग्रे युग्मे वाच्ये गोयुगशब्दः प्रयुज्यते, यथा गोगोयुगं गोशब्दस्योभयार्थत्वात् अश्वगोयुगं, उष्ट्रगोयुगं, हस्तिगोयुगं इत्यादि । एवं षट्त्वे वाच्ये षड्गवमित्यखण्डः प्रत्ययः, गोषड्गवं, अश्वषड्गवं हस्तिषड्गवमित्यादि पूर्ववदित्येके । (४) शतमादिर्यस्य तत् शतादिकं तस्मात् शतादिकात् । येषां संख्येयानां गजादीनां शतात् परा ऊर्द्ध्वं संख्या ते परःशताः, आदिना परःसहस्राः, परोलक्षाः इत्यादि, परःशतादिरिति सूत्रेण पञ्चमीतत्पुरुषसमासे ते साधवः परशब्दस्य पूर्वनिपातः सकारागमश्च निपातनात् परशब्देन समासार्थः परसूशब्दः सकारान्तोऽप्यस्तीत्यन्ये ।

प्राज्यं प्रभूतं प्रचुरं बहुलं बहु पुष्कलम् ॥ ६१ ॥
भूयिष्ठं पुरुहं भूयो भूर्यदभ्रं पुरु स्फिरम् ।
स्तोकं क्षुल्लं तुच्छमल्पं दभ्राणुतलिनानि च ॥ ६२ ॥
तनु क्षुद्रं कृशं सूक्ष्मं पुनः श्लक्ष्णं च पेलवम् ।
(१)त्रुटौ मात्रा लवो लेशः कणो ह्रस्वं पुनर्लघु ॥ ६३ ॥
अत्यल्पेऽल्पिष्ठमल्पीयः कनीयो(२)ऽणीय इत्यपि ।
दीर्घायते समे तुङ्गमुच्चैमुन्नतमुद्धरम् ॥ ६४ ॥
प्रांशूच्छ्रितमुदग्रं च न्यग् नीचं ह्रस्वमन्थरे ।
खर्वं कुब्जं वामनं च विशालं तु विशङ्कटम् ॥ ६५ ॥
पृथूरु पृथुलं व्यूढं विकटं विपुलं बृहत् ।
स्फारं वरिष्ठं विस्तीर्णं ततं बहु महद् गुरु ॥ ६६ ॥
दैर्घ्यमायाम आनाह आरोहस्तु समुच्छ्रयः ।
उत्सेध उदयोच्छ्रायौ परिणाहो विशालता ॥ ६७ ॥
प्रपञ्चाभोगविस्तारव्यासाः शब्दे स विस्तरः ।
समासस्तु समाहारः सङ्क्षेपः सङ्ग्रहोऽपि च ॥ ६८ ॥

---

(१) त्रुटौ इत्यपि पाठः । (२) कनिष्ठ इति वा ।

सर्वं[1] समस्तं[2]मन्यूनं[3] समग्रं[4] सकलं[5] समम्[6] ।
विश्वा[7]शेषा[8]खण्ड[9]कृत्स्ना[10]न्यक्षाणि[11] निखिला[12]खिले[13] ॥ ६९ ॥
खण्डे[1]ऽर्द्ध[2]शकले[3] भित्तं[4] नेम[5]शल्क[6]दलानि[7] च ।
अंशो[1] भागश्च[2] वण्टः[3] स्यात् पाद[1]स्तु स तुरीयकः ॥ ७० ॥
मलिनं[1] कच्चरं[2] म्लानं[3] कश्मलं[4] च मलीमसम्[5] ।
पवित्रं[1] पावनं[2] पूतं[3] पुण्यं[4] मेध्य[5]मथोज्ज्वलम्[1] ॥ ७१ ॥
विमलं[2] विशदं[3] वीध्र[4]मवदात[5]मनाविलम्[6] ।
विशुद्धं[7] शुचि[8] चोक्षं[1] तु निःशोध्य[2]मनवस्करम्[3] ॥ ७२ ॥
निर्णिक्तं[1] शोधितं[2] मृष्टं[3] धौतं[4] क्षालित[5]मित्यपि ।
सम्मुखीन[1]मभिमुखं[2] पराचीनं[1] पराङ्मुखम्[2] ॥ ७३ ॥

मुख्यं[1] प्रकृष्टं[2] प्रमुखं[3] प्रबर्हं[4]
वर्य्यं[5] वरेण्यं[6] प्रवरं[7] पुरोगम्[8] ।
अनुत्तरं[9] प्राग्रहरं[10] प्रवेकम्[11]
प्रधान[12]मग्रेसर[13]मुत्तमा[14]ग्र्ये[15] ॥ ७४ ॥
ग्रामण्य[16]ग्रण्य[17]ग्रिम[18]जात्यौ[19]
ग्र्यो[20]नुत्तमा[21]न्यनवरार्ध्य[22]वरे[23] ।

प्रेष्ठपरार्द्ध्यपराणि श्रेयसि
तु श्रेष्ठसत्तमे पुष्कलैवत् ॥ ७५ ॥
स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥ ७६ ॥
मचर्चिका प्रकाण्डो द्वौ प्रशस्यार्थप्रकाशकाः ।
गुणोपसर्जनोपाग्र्याण्यप्रधानेऽधमं पुनः ॥ ७७ ॥
निकृष्टमणकं गर्ह्यमवद्यं काण्डकुत्सिते ।
अपकृष्टं प्रतिकृष्टं याप्यं रेफोऽवमं ब्रुवम् ॥ ७८ ॥
खेटं पापमपशदं कुपूयं चेलमर्व च ।
तदासेचनकं यस्य दर्शनाद्दृग् न तृप्यति ॥ ७९ ॥
चारु हारि रुचिरं मनोहरं
वल्गुकान्तमभिरामबंधुरे ।
वामरुच्यसुषमाणि शोभनं
मञ्जु मञ्जुलमनोरमाणि च ॥ ८० ॥

---

(१) प्रेष्ठ इति वा (२) पुरुषो व्याघ्र इव पुरुषव्याघ्रः इत्यादिषु उपमेयं व्याघ्रादिभिरिति समासः, अश्वश्चासौ कुञ्जरश्च अश्वकुञ्जरः, गौश्चासौ नागश्च गोनागः । (३) उपाङ्ग्याणीति वा ।

साधु[16]रम्य[17]मनोज्ञानि[18] पेशलं[19] हृद्य[20]सुन्दरे[21] ।
काम्यं[22] कम्रं[23] कमनीयं[24] सौम्यं[25] च मधुरं[26] प्रियम्[27] ॥ ८१ ॥
व्युष्टिः[1] फलम[2]सारं[1] तु फल्गु[2] शून्यं[1] तु रिक्तकम्[2] ।
शून्यं[1] तुच्छं[2] वशिकं(1)[3] च निबिडं[1] तु निरन्तरम्[2] ॥ ८२ ॥
निविरीसं[3] घनं[4] सान्द्रं[5] नीरन्ध्रं[6] बहलं[7] दृढम्[8] ।
गाढ[9]मविरलं[10] चाथ विरलं[1] तनु[2] पेलवम्[3] ॥ ८३ ॥
नवं[1] नवीनं[2] सद्यस्कं[3] प्रत्यग्रं[4] नूत्न[5]नूतने[6] ।
नव्यं[7] चाभिनवे[8] जीर्णे[1] पुरातनं[2] चिरन्तनम्[3] ॥ ८४ ॥
पुराणं[4] प्रतनं[5] प्रत्नं[6] जरन्मूर्त्तं[1] तु मूर्त्तिमत्[2] ।
उच्चावचं[1] नैकभेद[2]मतिरिक्ताधिके[2] समे ॥ ८५ ॥

पार्श्वं[1] समीपं[2] सविधं[3] ससीमा[4]-
भ्याशं[5] सवेशा[6]न्तिक[7]सन्निकर्षाः[8] ।
सदेश[9]मभ्यग्र[10]सनीड[11]संनि-
धाना[12]न्युपान्तं[13] निकटो[14]पकण्ठे[15] ॥ ८६ ॥

सन्निकृष्ट[16]समर्य्या[17]दाभ्यर्णान्यासन्नसंनिधी[20] ।

---

(१) वसिकं इति वा ।

अव्यवहितेऽनन्तरं संसक्तमपटान्तरम्[1] ॥ ८७ ॥
नेदिष्ठमन्तिकतमं विप्रकृष्टपरे पुनः ।
दूरेऽतिदूरे दविष्ठं दवीयोऽथ सनातनम् ॥ ८८ ॥
शाश्वतोनश्वरे नित्यं ध्रुवं स्थेयस्त्वतिस्थिरम् ।
स्थास्नु स्थेष्ठं तत्कूटस्थं कालव्याप्येकरूपतः ॥ ८९ ॥
स्थावरन्तु जङ्गमान्यज्जङ्गमं तु त्रसं चरम् ।
चराचरं जगदिङ्गं चरिष्णु चाथ चञ्चलम् ॥ ९० ॥
तरलं कम्पनं कम्प्रं परिप्लवंचलाचले ।
चटुलं चपलं लोलं चलं पारिप्लवास्थिरे ॥ ९१ ॥
ऋजावजिह्मप्रगुणावव्यग्रेऽत्वनतोनते ।
कुञ्चितं नतमाविद्धं कुटिलं वक्रवेल्लिते ॥ ९२ ॥
वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत् ।
अनुगेऽनुपदान्वक्षान्वञ्च्य[2]ैकाक्येके एककः ॥ ९३ ॥
[3]एकतानायनसर्गाग्र्यैकाग्र्यं च तद्गतम् ।

---

(१) अपदान्तरमित्यपि दृश्यते । (२) अन्वग् अन्वची अन्वञ्चि ।
(३) एकतानं १ एकायनम् २ एकसर्गः ३ एकाग्रम् ४ ।

अनन्यवृत्त्येकायनगतं चाथाद्यमादिमम् ॥ ९४ ॥
पौरस्त्यं प्रथमं पूर्वमादिरग्रमथान्तिमम् ।
जघन्यमन्त्यं चरममन्तः पाश्चात्यपश्चिमे ॥ ९५ ॥
मध्यमं माध्यमं मध्यमीयं माध्यन्दिनं च तत् ।
अभ्यन्तरमन्तरालं विचाले मध्यमान्तरे ॥ ९६ ॥
तुल्यः समानः सदृक्षः सरूपः सदृशः समः ।
साधारणसधर्माणौ सवर्णः सन्निभः सदृक् ॥ ९७ ॥
स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः ।
भूतरूपोपमाः काशः सं-नी-प्र-प्रति-तः परः (१) ॥ ९८ ॥
औपम्यमनुकारोऽनुहारः साम्यं तुलोपमा ।
कक्षोपमानमर्चा तु प्रतेर्मा यातना (२) निधिः ॥ ९९ ॥
छाया छंदः कायो रूपं बिम्बं मानंकृती अपि ।

---

(१) संकाशः १ नीकाशः २ प्रकाशः ३ प्रतिकाशः ४ घञ्युपसर्गस्येति दीर्घे प्रतीकाश इत्यपि । (२) प्रतेः प्रतिउपसर्गात्परे मा-प्रभृतयः कृतिपर्य्यन्ता दशशब्दा योज्यन्ते यथा । प्रतिमा १ प्रतियातना २ प्रतिनिधिः ३ प्रतिच्छाया ४ प्रतिच्छंदः ५ प्रतिकायः ६ प्रतिरूपं ७ प्रतिबिंबं ८ प्रतिमानं ९ प्रतिकृतिः १० ।

